# साङ्ख्ययोगामृतम्

साङ्ख्ययोगविभागस्य वार्षिकपत्रिका

२०१९ - २०


**संरक्षक:**

**डॉ. हरेकृष्णकृष्णमहापात्र:**

प्राचार्य:

राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालय:),

श्रीसदाशिवपरिसर:, पुरी, ओडिशा

**प्रधानसम्पादक:**

**डॉ. अशोककुमारमीना**

विभागाध्यक्ष:, साङ्ख्ययोगविभाग:

**सम्पादका:**

**डॉ. सुकान्तिवारिक्**, सहायकाचार्या (संवि.)

**डॉ. विकासिनीगुमानसिंह**, सहायकाचार्या (संवि.)

**डॉ. पङ्कजकुमारतिवारी**, सहायकाचार्य: (संवि.)



**राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालय:),**

(राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा(ए)श्रेण्यां प्रत्यायितम्)

**श्रीसदाशिवपरिसर:, पुरी, ओडिशा**

**Sankhyayogamritam:** **ISSN : 2455-796X**
(AN ANNUAL RESEARCH MAGAZINE OF SANKHYAYOGA DEPARTMENT)
2019-20
E.mail : sankhyayogamritam2016@gmil.com

Chief Editor:-

**Dr. Ashok Kumar Meena**
Asst. Professor, H.O.D (S.Y)

Editor:-

**Dr. Sukanti Barik** (C.T.)
**Dr. Bikasini Gumansingh** (C.T.)
**Dr. Pankaj Kumar Tiwari** (C.T.)

Co-Editor:-

**Reaserch Scholar & Acharya Students**

Typist:-

**Bablu Pramanik**
**Madhusudan Das**

Copies:- **200**

Price:- **200/-**

Printed at:- **Jayashree Offset**
**Bus, Stand. Puri**





# शुभाशंसा

'कोऽहम्' ? 'कुतः समागच्छम्' ? 'प्रेत्य कुत्र गच्छेयम्' ? आत्मास्तीति केचन । नायमस्तीत्यपरे इत्यादयः प्रश्नाः प्रत्यहम् अहमहमिकया जीवे प्रादुर्भवन्ति । सर्वमिदं विज्ञानेनावगन्तुं प्रयतते जीवः । सदैव स्वकर्मणि विफलोऽयं जीवः तद् ज्ञानार्थं गुरुमेव / शास्त्रमेवाभिगच्छेत् । सततं लौकिकामुष्मिकसुखप्राप्तये शास्त्रं प्रवर्तते । यत्तुर्षु पुरुषार्थेषु धर्मार्थकाममोक्षाख्येषु मोक्षः परमपुरुषार्थः । 'न स पुनरावर्तते' इति श्रुतेः ।

महर्षिकपिलप्रणीता सांख्यस्मृतिः सुप्रसिद्धा शिष्टपरिगृहीता च । मोक्षदर्शनमात्रपर्यवसानेयं स्मृतिः । अपि च कपिलप्रभृतीनां ज्ञानमार्षम् अप्रतिहतं स्मर्यते । श्रुतिश्चात्र भवति- 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति' (श्वेता.उ.) ।

राष्ट्रियसंस्कृतसंस्थानान्तर्गतेषु दशपरिसरेष्वन्यतमत्वेन राजते श्रीसदाशिवपरिसरः, पुरी । तत्रस्थसांख्ययोगविभागपक्षतः 'सांख्ययोगामृतम्' इति पत्रिकाप्रकाश्यत इति श्रुत्वा मोमुद्यते मे चेतः । अनेन तद्विभागीयच्छात्राणां प्राध्यापकानां च प्रतिभा दृग्गोचरीभवति । परिसरसदस्यैस्मह सामाजिका अपि पत्रिकयाऽनया भवन्तु उपकृताः । सन्दर्भेऽस्मिन् विभागीयान् आचार्यान् भृशम् अभिनन्दामि । नयनपथगामी जगन्नाथस्वामी सर्वेभ्यः मङ्गलं वितनोतु ।

प. ना. शास्त्री

कुलपतिः

राष्ट्रियसंस्कृतसंस्थानम् (मा.वि)

नवदेहली

# राष्ट्रिय संस्कृत संस्थान
(मानितविश्वविद्यालय)
श्रीसदाशिवपरिसर, पुरी - ७५२००१ (ओड़िशा)
(मानव संसाधन विकासमन्त्रालय, भारत सरकार के अधीन)
तार : विद्यापीठन्
दूरभाष : ०६७५२-२२३४३९
फाक्स : ०६७५२-२२३४३९





RASHTRIYA SANSKRIT SANSTHAN
(DEEMED UNIVERSITY)
Shree Sadasiva Campus, Puri - 752001 (Orissa)
(Under Ministry of Human Resources Development, Govt. of India)
Gram : Vidyapitham
Phone : 06752 - 223439
Fax : 06752 - 223439




## शुभकामना

अस्माकं श्रीसदाशिवपरिसरसाङ्ख्ययोगविभागपक्षतः 'साङ्ख्ययोगामृतम्' इति पत्रिका प्रकाश्यत इति ज्ञात्वा सुखम् अनुभूयते मे चेतः । भगवता कपिलेन प्रवर्त्तितोऽयं सिद्धान्तः सुप्रतिष्ठितः, लोकानुगृहीतश्च । 'ऋषिं प्रसूतं कपिलम्' (श्वे.उ.५.२.२) इत्यादिवाक्येन आप्तत्वं परमर्षित्वञ्च कपिलमुनौ सुविदितम् ।

श्रुतीनाम् उपबृंह्मणं च स्मृत्यैव कर्त्तव्यम् । मन्वादिस्मृतयः कर्मप्रतिपादनपरत्वेन कर्मभोगोपबृंहणरूपाः । साङ्ख्यस्मृतिं विना उपनिषदां ज्ञानमपि भवितुं नार्हति।

एतादृशमहत्त्वपूर्णं सिद्धान्तं कपिलमहर्षिः प्रतिपादितवान् इत्यस्माद्धेतोः पत्रिकया सह साङ्ख्ययोगविभागस्य मङ्गलं कामये ।

Principal

प्रो. हरेकृष्णमहापात्रः
प्राचार्यः
राष्ट्रिय संस्कृत संस्थान (मानितविश्वविद्यालय),
श्री सदाशिवपरिसर, पुरी - ७५२००१
(ओडिशा)



## सम्पादकीयम् ...

"हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः" इति वचनात् योगशास्त्रमतीव प्राचीनमिति। तस्मादेवकालात् परम्पराक्रमेण योगशास्त्रस्यानुशासनं महर्षिपतञ्जलिना विहितम्।

सांख्यस्वीकृतपञ्चविंशतितत्त्वातिरिक्ततत्त्वरूपेण ईश्वरस्य ग्रहणात् योगदर्शनस्य सेश्वरसांख्यदर्शनमति नामान्तरमिति। दर्शनेऽस्मिन् योगरूपस्य प्राधान्यमनुभूयते। स च योगः सर्वानुभवसिद्धः, साम्प्रतिकयुगे न केवलमस्मिन् भारतवर्षेऽपितु देशान्तरेऽपि योगशास्त्रस्य समादरः दरीदृश्यते। ज्ञानक्रियोपचारविचाररूपाणां सामञ्जस्यं रुचिश्च यदवलोक्यते विश्वे, तदस्य पूर्णविकासं सूचयति। एतदुद्देश्येन प्रकाशते साङ्ख्ययोगशास्त्राधारितवार्षिकशोधपत्रिका 'साङ्ख्ययोगामृतम्' साङ्ख्ययोगविभागपक्षतः। पत्रिकायाम् आर्शीवचोभिः अस्मान् अनुगृहीतवन्तः कुलपतयः प्रो. पी.एन्.शास्त्रिमहोदयाः।

भागवतानुरागिणः परमवैष्णवश्च भवन्ति अस्माकं प्राचार्याः प्रो. हरेकृष्णमहापात्रमहोदयाः। तेषां कृते अपि हार्दं कार्तज्ञं कुसुमाञ्जलिं सर्मपयामि। अस्याः पत्रिकायाः सम्पादकत्वेन सहसम्पादकत्वेन च दायित्वं निर्वाहकानामाचार्याणां कृतेऽपि धन्यवादाः प्रदीयन्ते।

**डॉ. अशोककुमारमीना**
**विभागाध्यक्षः,**
**साङ्ख्ययोगविभागः**

# विभागीयकार्यविवरणम्

१. विभागेऽस्मिन् साङ्ख्ययोगामृतम् इति नामाख्या विभागीयपत्रिका प्रकाश्यते।
२. वर्षेऽस्मिन् साङ्ख्ययोगविभागे छात्राणां संख्या शताधिक ।
३. प्रतिशुक्रवासरे संगोष्ठी विभागेनानुष्ठीयते ।
४. जुलाईमासस्य पंचविंशतितमे दिनाङ्के आचार्यप्रथमपर्षे पञ्चत्रिंशच्छात्राणां प्रवेशो जातः।
५. जुलाईमासस्य चतुर्विंशतितमे दिनाङ्के अखीलभारतीयराष्ट्रियशैक्षिकमहासंघ-राष्ट्रियसंस्कृतस्थानयोः शाश्वतजीवनमूल्यायने संस्कृतम् इति विषयमाधारिकृत्या समायोजितायां राष्ट्रियसङ्गोठ्यां विभागीयाध्यापिका डॉ. विकासिनीगुमानसिंहः भागं गृहीतवती।
६. सितम्बरमासस्य पञ्चदशदिनाङ्के परिसरीय महिलाछात्रावासे विभागीयाध्यापिका डॉ. सुकान्तिवारिकः निर्णायकत्वेन भागं गृहीतवती।
७. अगष्टमासस्य त्रिंशत्तारिकायां द्विदिवसीयासंगोष्ठी समायोजिता आसीत् । एव विभागीयाः आचार्याः भागं गृह्न्तः शोधपत्रवाचनं कृतवन्तः।
८. डॉ. पञ्कजकुमारतिवारी अगष्टमासे समायोजिते संस्कृतसप्ताहसमारोहे वरिष्ठकनिष्ठ संस्कृतभाषणप्रतियोगितायां निर्णायकत्वेन भागं गृहीतवान्।
९. सितम्बरमासे विभागीयाः छात्राः शिक्षकदिवसं समायोजितवन्तः।
१०. सांख्ययोगविभागेऽस्मिन् सितम्बरमासस्य एकादशतारिकायाम् आचार्य-प्रथमपर्षस्य शास्त्री-प्रथमवर्षस्य च छात्राणां स्वागतसमारोहः महता उत्साहेन सम्पुरितः। तत्र विभागस्य सर्वेऽपि आचार्याः छात्राश्च उपस्थिताः आसन्।
११. डॉ. अशोककुमारमीना सितम्बरमासस्य हिन्दीपखवाडायां कार्यक्रमेषु भाषणप्रतियोगीतायां निर्णायकत्वेन भागं गृहीतवान्।
१२. डॉ. विकासिनीगुमानसिंहः सितम्बरमासस्य हिन्दीपखवाडायां कार्यक्रमेषु संगीतप्रतियोगितायां निर्णायकत्वेन भागं गृहीतवती।
१३. डॉ. पञ्जककुमारतिवारी सितम्बरमासस्य पञ्चादशतारिकायां हिन्दीपखवाडायां कार्यक्रमेषु निबन्धलेखनप्रतियोगीतायां निर्णायकत्वेन भागं गृहीतवान्।
१४. विभागस्याचार्यप्रथमवर्षीया छात्रा गौरीराणीसिंहः हिन्दीभाषणप्रतियोगीतायां वरिष्ठवर्गे प्रथमस्थानं निबन्धलेखनप्रतियोगितायां तृतीयस्थानं लब्धवती तथा एस.जि.एलिना पलेइ शास्त्री-तृतीयवर्षस्य छात्रा तृतीयस्थानं लब्धवती।
१५. वर्षेऽस्मिन् परिसीमारथ-शुश्रीसंगितामहापात्रे विद्यावारिधिप्रवेशपरीक्षा सम्पुत्तीर्णे।
१६. विभागीयाः शोधच्छात्राः सुजातासाहु-श्रीनिवासपण्डा-मधुसूदनदास-सीताकान्तमिश्रादयः राष्ट्रियसंगोष्ठ्यां भागं गृहीत्वा शोधपत्रमुपस्थापितव

# विभागीयाचार्याः



डॉ. अशोककुमारमीना
विभागाध्यक्षः (सहायकाचार्यः)



डॉ. सुकान्ति बारिक
(अंशकलिन-अध्यापिका)



डॉ. विकासिनि गुमानसिंह
(अंशकलिन-अध्यापिका)



डॉ. पङ्कजकुमारतिवारी
(अंशकलिक-अध्यापकः)



उद्घाटनोत्सवे मङ्गलं कुर्वन्त्य: विभागीयच्छात्रा:




मञ्चासीना: अतिथयो विभागप्रमुखा: सञ्चालकश्च




उद्घाटनोत्सवे उद्बोधयन्त: परिसरप्राचार्या:



उद्घाटनोत्सवे विभागीयच्छात्राः अध्यापकाश्च




उद्घाटनमहोत्सवे उद्बोधयन्त्यः मुख्यातिथयः सर्वदर्शनविभागाध्यक्षाः प्रो. गौरप्रियामहाभागाः




अतिथीनां स्वागतं कुर्वन्तः विभागीयप्रमुखाः डॉ. अशोककुमारमीनामहोदयाः



समापनसमारहे शिक्षाशास्त्रविभागप्रमुखानां
प्रो. विजयपालकछवाहामहोदयानां सम्मानं कुर्वन्तः विभागीयाः आचार्याः प्राचार्याश्च



संगोष्ठ्यां विभागीयाः छात्राः



छात्राः प्रमाणपत्रवितरणं कुर्वन्तः प्राचार्याः विभागप्रमुखाः मुख्यातिथयश्च

# विषयानुक्रमणिका





# सांख्यदर्शनानुसारं कार्यकारणतत्त्वविमर्शः

डॉ. अशोककुमारमीना

**सर्वदर्शनसंग्रहे माधवाचार्यः –**

अथ सांख्यैराख्याते परिणामवादेपरिपन्थिनिजागरूके कथंकारं विवर्तवाद आदरणीयो भवेदेष हि तेषामाघोषः। संक्षेपेण हि सांख्यशास्त्रस्य चतुरस्त्रोविधाः सम्भाव्यन्ते। कश्चिदर्थः प्रकृतिरेव, कश्चिद् विकृतिरेव, कश्चिद् विकृतिः प्रकृतिश्चः, कश्चिदनुभय इति।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृति र्न विकृतिः पुरूषः।।[१]

तत्र केवलाप्रकृतिः प्रधानपरेण वेदनीया मूलप्रकृतिः। नासावन्यस्य कश्चिद् विकृतिः। प्रकरोतीतिप्रकृतिः इति व्युत्पत्या सत्वरजस्तमोगुणानां साम्यावस्थाया अभिधानात्। तदुक्तम्–

मूलप्रकृतिरविकृति इति।

मूलं चासौ प्रकृतिमूलप्रकृतिः। महदादेः कार्यकलापरस्य असौभूत। न त्वस्य प्रधानस्य मूलान्तरम् अनवस्थापातात्। न च बीजाङ्कुरवद् अनवस्थादोषोनभवतीति वाच्यम्, प्रमाणाभावदितिभावः। विकृतयश्च प्रकृतयश्च महदाहङ्कारतन्मात्राणि तदप्युक्तम् –

महदाद्याःप्रकृतिविकृतयः सप्तः। इति।

अस्यार्थः- प्रकृतयश्च ता विकृतयश्चेति प्रकृतिविकृतयः। सप्तमहददीनितत्त्वानि।

तत्रान्तः करणादिपरवेदनीयं महतत्त्वम् अहङ्कारस्य प्रकृतिः, मूलप्रकृतेस्तुविकृतिः। एवमहङ्कारतत्त्वम् अभिमानापरनामधेयं महतो विकृतिः।

प्रकृतिश्च तदेव अहङ्कारत्त्वं सत्पञ्चतन्मात्राणांसूक्ष्माभिधानाम्। तदेवसात्विकं सत्प्रकृतिः एकादशेन्द्रियाणाम् – बुद्धीन्द्रियाणां चक्षुः श्रोतघ्राणरसनात्वगाख्यानां, कर्मेन्द्रियाणां वाक्पाणिपादपायूपस्थाख्यानम्, उभयात्मकस्य मनसश्च। रजसस्तु उभयत्र क्रियोतत्पादनद्वारेण कारणत्वमस्तीति न वैयर्थ्यम्। तदुक्तमीश्वरकृष्णेन[२]–

अभिमानोहङ्कारः तस्माद् द्विविधः प्रवर्तते सर्गः।
एकादशकश्च गणस्तन्मात्रापञ्चकश्चैव।।

सात्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात्।
भूतादेस्तन्मात्रः स तामसः तैजसादुभयम्।।
बुद्धीन्द्रियाणि चक्षुः श्रोतघ्राणरसनत्वागाख्यानि।
वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाण्याहुः।।इति।

केवला विकृतिस्तु वियदादीनि पञ्चभूतानि एकादशेन्द्रियाणि च। तदुक्तम्—

षोडशकस्तुविकारः।।[३]इति।

षोडशसंख्यावच्छिन्नो गणः षोडशकोविकारस्वनप्रकृतिरीत्यर्थः।

यद्यपि पृथिव्यादयो गोघटादीनांप्रकृतिः, तथापि न ते पृथिव्यादिभ्य स्तत्वान्तमिति न प्रकृतिः। तत्वान्तरोपादनत्वं चेहप्रकृतित्वमभिमतम्। गोघटादीनांस्थूलत्वेन्द्रियग्राह्यत्वयोः समानत्वेनतत्वान्तत्वाभावः। तत्रशब्दस्पर्शरूपरसगन्धतन्मात्रेभ्यः पूर्वापूर्वसूक्ष्मभूतसहितेभ्यः पञ्चभूतानिविषयादीनि क्रमेणैकद्वित्रिचतुःपञ्चगुणानि जायन्ते। इन्द्रियसृष्टिस्तुप्रागेवोक्ता। तदुक्तम्—

प्रकृतेर्महांस्ततोहङ्कारस्तस्माद्गणश्च षोडशकः।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्चभूतानि।।[४]

अनुभयात्मकः पुरूषः। तदुक्तम्—

नप्रकृतिर्नविकृतिःपुरूषः। इति।

पुरूषस्तु उभयपरिणामी न कस्यचित् प्रकृतिर्नापिविकृति कस्यचिदित्यर्थः। एतत्पञ्चविंशतितत्त्वसाधकत्वेन प्रमाणत्रयमभिमतम्। तदप्युक्तम् —

दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्।
त्रिविधंप्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धिः।।[५]इति।

असतः सज्जायते इतिनप्रामाणिकः पक्षः। असतो निरूपाख्यस्य शशादिशृङ्गवत् कारणत्वानुपपत्ते तृच्छतुच्छयोस्तादात्म्यनुपपत्तेश्च।

नापि सतो सज्जायते इतिसाम्प्रतम्। कारणव्यापारात्प्रागसतः शशविषाणवत् सतासम्बन्धलक्षणोत्पत्त्यनुपपत्तेः। नहितीलंनिपुणतमेनापिपीतंकर्तुं प्राप्यते।
ननुसत्वासत्वे घटस्य धर्माविति चेत्। असति धर्मिणि तद्धर्म इति व्यपदेशानुपपत्या धर्मिणः सत्वापत्तेः।

तस्मात् कारणव्यापारात् प्रागापि कार्यसदेव। सतश्चाभित्यारूपपद्यते। यथा— पीडनेनतिलेषु तैलस्य दानेन सौरभेयीषु पयसः।

असतः कारणे किमपि निदर्शनं न दृश्यते।

किं च— कार्येणकारणंसंबद्धंतज्जनकम् असंबद्धंवाप्रथमे कार्यस्य सत्वम् आदतम्। सतोरेसंबन्धः इति नियमात्। चरमेसर्वे कार्यं सर्वस्माज्जायेत, असंबद्धत्वाविशेषात्। तदा सांख्याचार्यैः —

असत्वान्नास्तिसंबन्धैः कारणैः सत्वसङ्गिभिः। असंबद्धस्य अनुष्ठेयसंबद्धमपि तत् जनयति, यत्र शक्तिश्च कार्यदर्शनो। तत्रसंगच्छते। तेलेषुतैलजननशक्तिः इत्यत्र तैलस्या सत्वेसंबद्धत्वविकल्पेनतच्छतिः इति। निरूपणयैयोगात् नभवति। पटस्तन्तुभ्यो नभिद्यतेतद्धर्मत्वात्, न यदेवं नतदेवम्, यथा गौरश्च, तद्धर्मश्च पटस्तस्मान्नर्थान्तरम्। तर्हि प्रत्येकं त एव प्रावरणकार्यं कुर्युरिति चेत्। न, संस्थानभेदेनाविर्भूतपटभावनानां प्रावरणर्थाक्रियाकारित्वोपपत्तेः। यथा हि कूर्मस्याङ्गानि कूर्मशरीरेनिविशमानानितिरोभवन्ति, निःसरन्ति चाविर्भवन्ति, एवं कारणस्य तन्त्वादेः पटादयो विशेषाः निःसरन्तः आविर्भवन्त उत्पद्यन्ते इत्युच्यन्ते, निविशमास्तिशोभावन्तो विनश्यन्तीत्युच्यते। नपुरपसतामुत्पत्तिः, सत्तांवाविनाशः।

यथोक्तं भगवद्गीतायाम्—

नासतोविद्यतेभावोनाभावोविद्यते सता इति ततश्च कार्यानुमानात् तत्प्रधानसिद्धिः।

तदुक्तम् -

असदकारणादुपादानग्रहणात् सर्वसंभावाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्।।[६] इति।

नापि सतो ब्रह्मतत्वस्य विवर्तः प्रपञ्चः बाधानुपलभ्यात्, आधष्ठारोप्ययो— श्चिजऽयोः कलधौतरूप्यादिवत् सारूप्याभाविनाशोपासंभवाच्च तस्मात्सुखदुःखमोहात्मककारणम्, तदन्वितत्वात् यद् येन अन्वीयते तत्तत्कारणम् यथा रूप्यकादिकं सुवर्णान्वितंसुवर्णकारणकम् , तथा चेदंतस्मात्तथा इति।

तत्रजगत्कारणे येयं सुखात्मकता तत् रजः, या च मोहत्मकता तत् तमः इति त्रिगुणात्मिककारणसिद्धिः। तथाहि प्रत्यकं भावस्त्रैगुण्यवन्तोऽनुभवन्ते। यथा— मैत्रदारेषु, सत्यवत्यां मैत्रस्य मोहोभवति, तंप्रतितमोगुणसमृद्धवान्। एवम् अन्यदपि धटादिकं लभ्यमापं सुखंकरोति, परैरपि ह्रियमाणं दुःखाकरोति, उदासीनस्य उपेक्षाविषयत्वेन उपतिष्ठते। उपेक्षाविषयत्वं नाममोहः। मुदं वैचित्ये इत्यस्माद्धात्के मोहशष्टनिष्पतेः। उपेक्षणीयेषुचित्तवृत्यनुस्यात्। तस्मात् सर्वंभावजातंसुखदुःखमोहात्मकंत्रिगुणप्रधानकारणकम् अवगम्यते। तथा च श्वेताश्वतरोपनिषदिश्रूयते—

अजामेकांलोहितशुक्लकृष्णां, बह्वी: प्रजा सृजमानां नमाम:।
अजा ये तां जुषमारणां भजन्ते जहत्येनां भुक्तभोगां नुमस्तान्।।[७]

अत्रलोहितशुवलकृष्णशब्दा: रजकत्वप्रकाशत्वावरकत्वासाधर्म्यात् रज: सत्वतमोगुणत्वप्रतिपादनपरा:।

ननु अचेतनंप्रधानं चेतनानधिष्ठितं महदादिकार्ये न व्याप्रियते। अत:केनचित् चेतनेन अधिष्ठात्रा भवितव्यम्, तथा च सर्वार्थदर्शीपरमेश्वर: स्वीकर्तव्य: चेत् तदसङ्गतम्। अचेतनस्यापि प्रधानस्य प्रयोजनवशत प्रवृत्त्येुपपत्ते:। दृष्टं च अचेतनं चेतनानधिष्ठितंपुरूषार्थाय प्रवर्तमानम्। यथा– वत्सवृद्यर्थम् अचेतनं लोकोपकाराय प्रवर्तते, तथा प्रकृतिरचेतनापिपुरूषविमोक्षाय प्रवर्त्स्यीपि।

तदुक्तम्–

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।
पुरूषविमोक्षनिमित्तं तथा प्रवृत्ति: प्रधानस्य।।[८]

यस्तु परमेश्वर: करूणया प्रवर्तक: इति परमेश्वरास्तितत्त्वादिनांडिण्डिम: प्रायेण गत: विकल्पानुपपते: स किं सृष्टेप्राक्प्रवर्तते सृष्टयुत्तरकाले वा आद्येशरीराद्यभावेनदु:खानुत्पतौजीवानांदु:खग्रहणेच्छानुपपत्ति:। द्वितीये परस्पराश्रय प्रसङ्ग-करूणया सृष्टि: सृष्ट्या: च कारूण्यमिति।

तस्मात् अचेतनस्यापि चेतनाधिष्ठितस्य प्रधानस्य महदादिरूपेण परिणाम: पुरूषार्थप्रयुक्त: प्रधानपुरूषसंयोगनिमित्त:। यथा नित्यव्यापारस्यापि अयस्कान्तस्य संशोधनेन लोहस्य व्यापार: तथा नित्यव्यापारस्य पुरूषस्य सन्निधानेन प्रधानेव्यापारो युज्यते। प्रकृतिपुरूषसंबन्धश्च पङ्गवन्धवत् परस्परापेक्षानिबन्ध:। यथा खलु कौश्चित् पङ्गबन्धौ पथिसार्थेनगच्छन्तौदौवकृतादुपत्पवात् परित्यक्तसार्थो मन्दमन्दमितस्तत:परिभ्रमन्तौ भयाकुलौ देववशात् संयोगमुपगच्छेताम्। तत्र चान्धेन पङ्गु स्कन्धमारोपित:, तत: पङ्गुदर्शिमार्गेणान्ध:समीदितंस्थानंप्राप्नोति। पङ्गुरपि स्कन्धधिरूढ:। तथापरस्परपेक्षप्रधानपुरूषनिबन्धन:सर्ग:।

पुरुषस्य दर्शनार्थं कैवल्यार्थतथा प्रधानस्य[९]।

पङ्गवन्धवदुभयोरपि सम्वन्धस्तत्कृत:सर्ग:। इति। ननुपुरूषार्थनिबन्धताभवतुप्रकृते: निवृत्तिरस्तुकथमुपपद्यतं इति उच्यते यथा भर्गा दृष्टोपास्वैरिणी भर्तारं पुनर्नोपैति यथा वाकृतप्रयोजना नर्तकी निवर्तते, तथा प्रकृतिरपि। यथोक्तम्–

रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।
पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृति:।।[१०] इति।

साधारणारीत्या वत्सपोशन्यर्थम् अचेतनदु:खस्य यथा प्रवृत्ति: पुरूषस्य भोगापवर्गर्थं तथा प्रकृतिप्रवृत्तिरिति स्वीकारेऽपि समष्टिव्यष्टिप्रकृतौ यावना चेतनपुरूषस्य जीवस्य वाऽधिष्ठानंभवति। तावन् जडायां प्रकृतौ

परिणामकारिणी चेतनशक्तिरेव कथमव्यगता भवितुमर्हति, नापि प्रकृतिरेव परिणामद्वारसृष्टिविस्तारंविधातुं पारयतीति।

तत्सन्निधानादधिष्ठा तत्त्वंमणिवत् विशेषकार्यस्यापि जीवानाम् इति यथा अयस्कान्तमणिसन्निध्यालोहे चेतनाशक्तिरगता भवति। तथैव सांख्ययाऽनन्तस्य चेतनामतस्य पुरूषस्याधिष्ठानात् समष्टिप्रकृतिः कार्यं करोति प्रति पिण्डम् औपचारिबन्धनवद्यजीवभावापन्नपुरूषाधिष्ठाञ्च व्याष्टि प्रकृतिः कार्यं विदधति। प्रकृतावधिष्ठितः पुरूषस्य कुठस्थ चेतन स च जीवदेहावच्छेदेन श्वस्यैव सत्वारूपः अनेन परमात्मनैव जीवरूपं अनुप्रवेशं विधाननाम्नो रूपस्य च विकार उत्पादी व्यर्थकृपया अनेनैव जीवेनात्मनाऽनुप्रविश्य नामरूपेव्यकरोत्।

परं विशेषः वेदान्ते ईश्वरच्छ्या प्रकृतिपरिणामः सृष्टिक्रिया चेति स्वीकृतम्। साख्ये पुनःकुटस्थ चेतन्यऽधिष्ठानमात्रेण प्रकृतिपरिणामोऽङ्गी कृतः इति इदमेव सांख्ये पुरूषरूपेण प्रकृतावीश्वरस्याधिष्ठानं ईश्वरसिद्धेः इति। सूत्रस्यापि लौकिकप्रत्यक्षेण लौकिकविचारेण चेश्वरः साधयितुं न शक्यते। कदाचित् इतरेऽपि कर्मविशेषकविशेषमुपाश्रिताः ततस्यततः परिच्युतः सुखंदुःखं क्रमेण कर्मबन्धनानुसारेण संजायते। नास्तिजगतिकेवलंसुखदुःखवा यतः सांसारिकेषु केवलं सुकर्म दुष्कर्मवान् प्रायः दृश्यते कुत्रचित् अंशे सुकर्म कुत्रचित् दुष्कर्मम् इति तन्नियामकं यथा- चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च इति।

**पादटिप्पणी**

१. सांख्यकारिका – ३
२. सांख्यकारिका – २४-२६
३. सांख्यकारिका – ०३
४. सांख्यकारिका -२२
५. सांख्यकारिका – ०४
६. सांख्यकारिका – ०९
७. श्वेताश्वतरोपनिषदि– ४.५
८. सांख्यकारिका – ५७
९. सांख्यकरिका – २१
१०.सांख्यकारिका – ५९

सांख्ययोगविभागाध्यक्षः
श्रीसदाशिवपरिसरः, पुरी
राष्ट्रियसंस्कृतसंस्थानम्,नवदेहली

# अष्टाङ्गयोगेषु यमविचारः

**डा.सुकान्तिवारिकः**

पातञ्जलयोगसूत्रमिति ग्रन्थः योगदर्शने सर्वोत्कृष्टरूपेणवर्तते। योगेन चित्तस्य पदेनवाचांमलं शरीरस्य च वैद्यकेन योपाकरोत्तं प्रवरंमुनीनांपतञ्जलिंप्राञ्जलिरानतोऽस्मि। "यजु समाधौ (दिव्यदिगणीय आत्मनेपदी)एवं "युजिर् योगे" (रुधादिगणीय उभयपदी) धातोः घञ्[१]प्रत्यये कृतेसति योगशब्दस्य निष्पत्तिर्भवति। शास्त्रे योगशब्दस्य अर्थःसमाधिः। योगस्य द्वितीयोऽर्थः संयोगः इति न्यायवैशेषिकदर्शानाः प्रतिपादयन्ति।[२] योगशब्दप्रयोगः अनेके अर्थे क्रियते। यथा - योगः संत्ङ्नोपायध्यान संमतियुक्तिषु "इति अमरकोषः।[३] योगोऽपूर्वार्धिसं प्राप्तौ संगतिध्यानयुक्तिषु। वपुःस्थैर्यप्रयोगे च विष्काम्भादिषु भेषजे। विग्रब्धघातके द्रव्योपाय संनहनेष्वपि। कर्मनेऽपि च इति मेदिनीकोषः। आदिकालात्प्रचलितः योगपरम्परां समुद्धर। महाभारते कथ्यते –

सांख्यस्यवक्ताकपिलःपरमार्षिः स उच्यते।
हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः।।[४]इति।

योगस्य अभ्यासेन चित्तशुद्धिः, पदेनवाकशुद्धिः, वैद्यकेनशरीरशुद्धिः जायते। योगशास्त्रे योगसूत्रम्, तथा व्याकरणशास्त्रे महाभाष्यम्, वैद्यशास्त्रे चरकसंहिता इत्येते ग्रन्थाःमहर्षिपतञ्जलिनाविरचिताः। तेषुपतञ्जलेः योगदर्शनमत्यन्तं प्राधान्यं भजते।

महर्षेः पतञ्जलेः अनुसारं योगो नाम चित्तवृत्तिनिरोधः। चित्तस्य निर्मलसत्त्वपरिणामरूपस्य या वृत्तयोङ्गाङ्गिभावपरिणामरूपाः तासां निरोधो बहिर्मुखतया परिणतिविच्छेदादन्तर्मुखतया प्रतिलोमपरिणामेन स्वकारणे लयो योग इत्याख्यायते। स च निरोधः सर्वासांचित्तभूमीनांसर्वप्राणिनांधर्मः कदाचित् कस्याञ्चिद् भूमौ आविर्भवति।

महर्षिपतञ्जलिप्रणीतं योगदर्शनं साम्प्रतिकभारतीयसमाजे सर्वाधिकगुरूत्वपूर्ण योगदर्शने समाधि-साधन-विभूति-कैवल्यनामकाः चत्वारः सन्ति। "यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोष्टावङ्गानि" इति। अस्मिन् प्रबन्धे केवलं यमसंज्ञकस्य प्रथमयोगाङ्गस्य स्वरूपं उपस्थाप्यते। तद् यथा– "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमा" इति। अहिंसां प्राणवियोगप्रयोजनव्यापारो हिंसा, सा च सर्वेषाम्अर्थानाहेतुः , तस्य अभावःअहिंसा। हिंसायाः सर्वकालमेव परिहार्य्यत्वात् प्रथमं तदभावरूपाया अहिंसानिवेशः। अहिंसाभ्यासस्य फलं निरूपयति। -

अहिंसाप्रतिष्टायां तत्सन्निधौ वैरत्यागः इति, अहिंसा भावयतः सन्निधौ सहजविरोधनामप्याहिन कूलहीनां, निर्नयः तथावस्थानंभवति। हिंसाअपिहिंस्रत्वं परित्यजन्तात्यर्थः अहिसाप्रतिष्टार्थसर्वदासर्वस्मिन्कालेसर्वप्राणिषु हिंसायाः परिहारः कर्त्तव्यम्। जाति-देश-काल-समयादिष्यप्याहिसापालनं कर्त्तव्यम्। "सत्यं वाङ्मयासोर्यथार्थत्वम्"। अर्थात् मनोभावयो यथार्थत्वं सत्यम्। सत्याभ्यासवतः कि भवतात्याह- सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्। क्रियममाणहि क्रिया यामादिकाः फलंस्वर्गादिकं

प्रयछन्ति। तस्यतु सत्याभ्यासवलेन योगिनस्थाभां सत्यं प्रकृष्यते यथा क्रियायाम् अकृतायाम् अपि योगी फलमाप्नोतितद्वचनात् यस्य तस्य चिद् क्रियाम् कूर्वतीपि क्रियाफलं भवतीत्यर्थम्। "स्तेयं परास्वापहरणं तदभावोऽस्तेयम्ह्लवा परद्रव्यहरणं चौर्यवृत्तिवां सोयम् तन्निवृत्ति अस्तेयम्। अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् अस्तेयं यदाभ्यास्यति तदास्य तत्प्रकर्षयति निरभिलाषस्यापि सर्वतोउत्पतिउपतिष्यन्ते। "ब्रह्मचर्यमुपस्थसंयम:" वीर्यधारणं च ब्रह्मचर्य्यम्, तस्य फलं तु ब्रह्मचर्यंप्रति वीर्य्यलाभ:, नकेवलम्उपस्थ: इन्द्रियस्य संयमेन वीर्यलाभ: जायते अपि तु समस्त इन्द्रियाणां संयमेन एव। अतो:अत्र उपस्थोन्द्रियशब्द: अन्वेषामपि इन्द्रियाणम् उपलक्षण: इतिस्वीकृत्य इन्द्रियाणां कामदमनं ब्रह्मचर्यमिति प्रतिपादयन्ति। इन्द्रियाणि कामसनामुद्दीपयितुं भवन्ति सहायकानि। अत:सर्वेषामपि इन्द्रियाणां संयम: आवस्यक:, सङ्गदोषात् कामभावस्य क्रमश: क्रोधस्य च उत्पत्तिजायते। अत: कामाविकारस्थाम् उत्पादनमेव ब्रह्मचर्यम्। ब्रह्मचर्याभ्यासेन शक्तिरूपत्पद्यते। ब्रह्मचर्यप्रकर्षेण च मनशरीर इन्द्रियेषु शकत्युत्कर्षो जायते इति। "अपरिग्रहोभोगसाधनानामस्वीकरणम्" विषयाणां ग्रहणेअर्जन-रक्षण-ज्ञेय-हिसादिजनितदोषसम्भवात् तेषामग्रहणम्अपरिग्र: य: खलुमवौद्धिक-वाचिक-शारिरीक-भेदेनत्रिविध। तेषु वुद्धया विषयम्प्रतिं सम्पूर्णरूपेण सकत्यभाव: वौद्धिकापरिग्रह:, वाचां पूर्णसंयम: वाचिकापरिग्रह:, धनधान्यादिवस्तुभूमे: प्रयोजनाधीकस्याग्रहणं शारीरिकपरिग्रह: अपरिग्रहस्थैर्य्ये जन्मकथन्तासम्वोध: कथमित्यस्य भावकथं च जन्मकथं च तस्या संवोध: सम्यक्ज्ञानं जन्मान्तरे कोऽयं कीदृश:किं कार्य्यकारी च जिज्ञासायां सर्वम्एवं सभागनामच्यर्थ:। नकेवलंभोगसाधनंप्रतिएवपरिग्रहो यावत् आत्मन:शरीरपरिग्रोऽपिपरिग्रह:भोगसाधनन शरीरस्य।

यदा कश्चन योगी अपरिग्रहेप्रतिष्टांलभते स पूर्वजन्मन:वार्त्तासाम्प्रतिकसमाजेभविष्यत: च ज्ञातुंसमर्थोभवति। ताश्च क्षिप्तंमूढं विक्षिप्तम्एकाग्रंनिरुद्धमिति चित्तस्य भूमय: चित्तस्यावस्थाविशेषा:। तत्रक्षिप्तंरजसउद्रेकादस्थिरं बहिर्मुखतया सुखदु:खादिविषयेषुविकल्पितेषु व्यवहितेषुवारजसाप्रेरितम्, तञ्चसदैव दैत्यदानवादीनाम्। मूढ़ तमसउद्रेकात्कृत्याकृत्यविभागमन्तरेण क्रोधादिभि:, विरुद्धकृत्येष्वैव नियमितम्, तञ्चसदैवरक्ष:पिशाचादीनाम्, विक्षिप्तं तु सत्त्वोद्रेकाद् वैशिष्ट्येन परिहृत्य दु:खसाधनंसुखसाधनेष्वैवशब्दादिषुप्रवृत्तम्, तञ्चसदैवदैवानाम्भवित। एतदुक्तंभवतिरजसाप्रवृत्तिरूपम्, तमसा परापकारनियतम्[५], सत्त्वेन सुखमयं चित्तंभवति।

योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीपतिराविवेकख्याते:[६]इति। अष्टाङ्गस्यानुसरणेन चित्तमालिन्यविनाश:, विवेकख्याते: उत्पत्ति: पर्यन्तं ज्ञानस्य प्रकाशश्च भवति। यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयोऽष्टावङ्गानि[७]। अष्टाङ्गयोगाभ्यासेन चित्तमालिन्यनिवारणं संसाध्य तदद्वारासाधक:समाधिस्थितिंप्राप्नोति। अष्टाङ्गनां यथाक्रमम् अनुष्ठानंस्वरूपं च वक्ष्यते। अष्टाङ्गयोगे नियम: पतञ्जलिमहर्षिणा नैतिकजीवनस्य महत् प्राधान्यं दत्तम्। इन्द्रियनिग्रहस्य योगसमाधे: जीवात्मभूतस्य सिद्धि: यमनियमानाम् अनुपालनेनैव प्राप्यते। यम: इत्ययं शब्द: यम उपरमे इत्यस्मात् धातो:निष्पन्न: यम्यते चित्तम्अनेनइति यम:। अहिंसासात्यास्तेयब्रह्मचर्यापरिग्रहा यमा: इति यमा:।[८]पतञ्जलि: यमं महाव्रतमितिउद्घोषयति।

इतरेषांमानवानांजन्तनांवामनसावचा, कर्मणावादु:खजननंएवअहिंसा इत्युच्यते। सर्वदा कायेन मनसावाचासर्वदा प्राणात्ययादि सङ्कटकालेऽपीत्यर्थ: स्थावरजङ्गमादि सर्वप्राणीनामनभिद्रोह:पीडनबुद्धिराहित्यमित्येव योगाङ्गभूताऽहिंसा।[९] तत्इत्थंविवृतं व्यासभाष्ये-तत्राहिंसा सर्वथासर्वदासर्वभूतानामनभद्रोह:। पतञ्जलियोगसूत्रग्रन्थे अहिंसाया: उपयोग: एवउक्त:। अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्याग: इतिसूत्रेण अहिंसायां ये भवन्ति तेषां सान्निध्ये वैरभावा: नश्यन्ति। तथा च भाष्ये इत्थं च वर्त्तते-सर्वदिक्स्थानि अन्योपतिष्ठन्ते रत्नानि। सत्यं यथार्थे वाङ्मनसे। यथा दृष्टं यथानुमितं यथा श्रुतंतथावाङ्मनश्च।[१०] वस्तुतत्त्वस्य यथातथ्यं प्रतिपादनं सत्यमित्युच्यते।

सत्य ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्।
प्रियं च नानृतं ब्रूयात् एष धर्म:सनातन:।।[११]इति।

वाक्यमनुसृत्य सत्यवचनस्य हिंसाचरणस्य च अन्योन्यविरूद्ध यथा स्यात् तथा व्यवहर्तव्यम्। एवं अन्योन्यविरूद्धये एतयो: आचरणे योगिना महान्विवेक: प्रयुक्त: स्यात्। पतञ्जलि: योगसूत्रग्रन्थे सत्यस्य प्रयोजनम् इत्यम् उक्तवान् सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् इतितदेवउक्तंमहर्षिणा ऋतंभरातत्रप्रज्ञा[११] इति सत्यस्य आचरणेन सत्यस्य वाच:अनुवादे च तादृशवाच:प्रभावेण क्रियायाम असत्यामपि क्रियाफलं सिद्धंभवतिइति प्रतिपादयति पतञ्जलि:।

अस्तेयम् स्तेयं नाम अन्येषांरत्नानां, स्वर्णादीनां य वस्तूनाम्अपरहणं, तदभाव: अस्तेयम्। व्यासभाष्ये एवंविवृणोति-

स्तेयमशास्त्रपूर्वकं द्रव्याणां परत:स्वीकरणम्।
तत्प्रतिषेध:पुनरस्पृहारूपमस्तेयमिति।।[१२]इति।

अस्तेयप्रतिष्ठानस्य योगिन: सर्वसम्पद:उद्भवन्ति। अहिंसा, सत्यत् इत्येवों द्वौ यमौ अभ्यासाङ्गत्वेन निर्दिष्टौइतिवक्तुं शक्यते। अवशिष्टां त्रय: अस्तेयम्ष ब्रह्मचर्यम्ष इपरिग्रह:इति रूपा: वैराग्यस्य सङ्केतरूपत्वेन इवनिर्दिष्टा:।

ब्रह्मचर्यम्महर्षिपतञ्जलि: ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभ:[१३] इतिसूत्रात् इन्द्रियनिग्रहरूपस्य ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभरूपं प्रयोजनं निर्दिष्टवान्। व्यासभाष्ये इत्थंनिवृत्तम् - यस्य लाभाद् अप्रतिद्यान्गुणानुत्कर्षयति। सिद्धश्च विनयेषु ज्ञानमोधातुंसमर्थोभक्तीति।

अपरिग्रह: पतञ्जलिना प्रोक्तयमेषुपञ्चसुअपरिग्रह: इतिपञ्चम: भवति। अपरिग्रहोनाम अन्यस्मात् अग्रहणम्। अपरिग्रहस्य स्वरूपं वर्णायन् भगवान् व्यास: एवंविवृणोति विषयाणामर्जनरक्षणक्षयसङ्गहिंसादोषदर्शनादस्वीकरणम् अपरिग्रह: इति। अपरिग्रहस्य उपयोगं पतञ्जलि: एवंउक्तवान्

"अपरिग्रहस्थैर्ये जन्मकथन्तासम्बोध:।"[१४]

अपरिग्रहे प्रतिष्ठितस्य साधकस्य जन्मकथनतासम्बोधभवतीतिपतञ्जलि: सूचयति।

चित्तस्य स्थिरवृत्तित्वं श्वासप्रश्वाससंयमात्।
इति पातञ्जलाज्ज्ञेय: प्राणायामसमाशय:।।

प्राणायामाभ्यासेन विवेकख्यातेरावरणं क्षीयते। "तत: क्षीयते प्रकाशावरणम्[१५]"

" इति पतञ्जलिसूत्रान्नोऽवबोध:।

## सहायकग्रन्थसूची-


१. यो. सू.-३.१८
२. व्या.भा.-१.१.२९
३. अमरकोष: - ३.३.२२
४. सूमहाभारत: शान्तिपर्व: - ३४९.६५
५. परोपकारनिरतं(पा.)
६. यो. सू.-२.१८
७. यो. सू. - २.२९
८. यो. सू. -२.३०
९. भास्वती -२.३८
१०. व्यासभाष्य: - २.३८
११. यो. सू.-१.४८
१२. यो. सू. - व्यासभाष्य :
१३.यो. सू. - २.३८
१४. यो. सू. - २.३८
१५. यो. सू. - २.३९



सदाशिवपरिसर:,पुरी
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

# स्थूलशरीरम्

डॉ. विकाशिनीगुमानसिंह

अतिरजोगुणोत्थरागेण स्त्रीपुरुषयोः संगमे सति ऋतुकाले गर्भाशये रेतः शोणितयोः संकरो जायते। पूर्वे मासे धातुनां वातपित्तश्लेष्मणां क्षोभात् भूतचैतन्ययुक्तं क्लेदमात्रं (कलिलां) जायते। द्वितीये मासे तेजसा वायुना च तत् कलिलां संशुष्कं सत् अर्बुदन्वं (मांसकीलन्वं ) प्राप्नोति। "द्वितीये मासं एव गर्भस्य हि सम्भवतः पूर्व शिरः संभवतीत्याह शौनकः, शिरोमूलन्वात् देहेन्द्रियाणाम्। पाणिपादमिति "मार्कण्डेयः, तन्मूलन्वाच्चेष्टाया गर्भस्य नाभिरिति पाराशर्यः, ततो हि बर्द्धते देहो देहिनः। हृदयमिति कृतवीर्यः, बुद्धेर्मनसश्च स्थानन्वात्। मध्यशरीरमिति सभूतिर्गौतमः, तन्निबद्धन्वात् सर्वगात्रस्य। सर्वाङ्गानि युगपत्संभवन्तीति धन्वन्तरिः।" (इति सुश्रुते) पृथिव्यादि पञ्चमहाभूतानि, सत्वादयोगुणाः, ज्ञानेन्द्रियाणि आत्मा चेति गर्भं जीवयन्ति; यथा मलादिदुर्गन्धिना अधःपतनं न भवेत् तथा रक्षयन्ति। यस्माद् गर्भवत्या रसबहा नाड्यो बालकस्य नाभिनाड्यां लग्ना भवन्ति तस्मात् तावत् आहार-योगात् शिशुर्बुद्धिं प्राप्नोति।

ततस्तृतीये मासे इन्द्रियाणि उद्भवन्ति। चतुर्थे मासे स्पन्दते (किञ्चिच्चलति)।तत्रैव मासे अङ्गानां स्थैर्यं भवति। (अकृत्या स्थितिः)। पञ्चममासे रूधिरस्य् ुद्भवः षष्ठे मासे वलस्य वर्णस्य (रूपस्य) नखलोम्नां च संभवः। सप्तमे स शिशुः नाडीस्नायुशिरायुतः भवति। अष्टमे मासे स शिशुः त्वङ्मासवान् भवति। नवमे अथवा दशमे मासे प्रसववायुना प्ररितां गर्भः सहसा बहिरेति। क्वचिच्च स्वकर्माधीनः सप्तमे अष्टमे मा मासं आयासवशात् बहिरेति। परं तत्रोद्भवः प्रायो न जीवति।

यतः मातुः सकाशादस्य लोमलोहितमांसानि जायन्ते पितुः सकाशाच्च स्नाय्वस्थिमज्जानां जायन्ते, तस्मादिदं वस्तु षाट्कौशिकमुच्यते। बहिर्गतवायुना संस्पृष्टोत एव तत् क्षणं विगतस्मृतिः मातृयोनेर्यन्त्रात् कनकतन्तुवत् निःसरणेन जातपीडः स शिशुः हृतधन इव रोरुध्यते। यथा-

"जातो मृर्तश्च कतिधा न कतिस्तनानां पीतं पयो न कलिताः कति मातरः न। उत्पद्य बंधविधुबधुना यतिष्य इत्यस्य विप्लवमुपैति बहिर्मनीषा"।। इति।।

अर्थात् अहं कतिवारं जाततोमृतश्च न, अपि तु बहुकृत्व: जातो मृतश्चाभूवम्। मया कतिस्तपनां पयो नपीतम् अपि तु बहूनां स्तनानां दुग्धं पीतम्। मया कति मातरो न कलिता:? अपि तु बह्वयो जनन्य: सम्पादिता:। अत: अधुना गर्भान्नि:सृत्य संसारपाशविनाशार्थं यत्नं करिष्यामि। एवं अस्य गर्भस्थस्य बुद्धि: बहिरागत्य विनाशं प्राप्नोति। अत एव भृशं रोदितीति।

अस्मिन् शरीरे सप्त बोध्या: तथा चोक्तं धातुमना: उपधातव: न्वचश्च सप्त बोध्या: तथा चोक्तं वपुनिर्णये शार्ङ्गडरकझ-

सप्ताशया: सप्तधातव: सप्ततन्मला:।
सप्तोपधातव: सप्त त्वच: सप्त प्रकीर्तिता:।। इति।

कला: सप्त यथा-

मांसासृङ्मेदसां तिस्रो यकृत्प्लीहोश्चतुर्थिका।
पञ्चमी च तथां त्राणां षष्ठी चाग्निधरामता।।
रेतोधरा सप्तमी स्यादिति सप्त कला: स्मृता:।। इति।

आशया: सप्त यथा-

श्लेष्माशय: स्यादुरसि तस्मादामाशयस्त्वध:।
उर्ध्वमग्न्याशयो नाभेर्वामभागे व्यवस्थित:।।
तस्योपरि तिलं ज्ञेयं तदध: पवनाशय:।
मलाशयस्त्वधस्तस्य बस्तिमूत्राशयास्त्वमी।। इति।

सप्त धातवो यथा-

रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातव:। इति।

धातुमला: सप्त यथा-

कफपित्तं मलश्चैव प्रश्चदो नखरोम च।
स्नेहोऽपि पिडिटिका चैव धातुनां क्रमशो मला:।। इति।

सप्तउपधातवः यथा-

स्तन्यं रजश्च नारीणां काले भवति गुच्छति।

शुद्धमांसभवः स्नेहो वसासंकीर्त्यने च सा।।

स्वेदो दन्तास्तथा केशास्तथैवोजश्च सप्तमम्।। इति।

सप्तत्वचो यथा-

ज्ञेयोऽवभासिनी पूर्वा सिध्मस्थानं च सामता

द्वितीया लोहिता ज्ञेया तिलकालकजन्मभूः।

श्वेता तृतीया संख्याता स्थानं चर्मदलस्य सा।

ताम्रा चतुर्थी विज्ञेया किलासश्वित्रभूमिका।

पञ्चमी वेदिनी ख्याता सर्वोकुष्ठोद्भवैस्ततः।

विख्याता लोहिता षष्ठी ग्रन्थिगण्डापचास्थितिः।।

स्थूला त्वक् सप्तमी ख्याता विद्रध्यादेः स्थितिश्च।। इति।

तथा शरीरे वातपित्तकफस्याः त्रयो दोषाः। नव शतानि(९००) स्नायवः शरीराच्छादकनाड्यः। दशाधिकद्विशतानि संधयः। त्रिशतानि अस्थीनि। मर्म (हृदयादि) सप्तधिकं शतम्। शिरा सप्तशती। कण्डरा (अवयवविस्तारसंकोच सम्पादिका विशेषनाड्यः) षोडश। मांसपेश्यो विंशतिरधिका। रसबाहिन्यो धमन्यः चतुर्विंशतिः।

तदुक्तं शार्ङ्गधरेण-

त्रयो दोषा नव शतं स्नायुनां संधयस्तथा।

दशाधिकं च द्विशतमस्थ्नां च त्रिशतं मतम्।।

सप्तोत्तरं मर्म शतं शिरासप्तशतं तथा।।

चतुर्विंशत्यधिकाः कंडराश्चैव षोडश।। इति।

पुरुषस्य शरीरं दशच्छिद्रं वदन्ति। तत्र नव प्रसिद्धानि। दशमं ब्रह्मरन्ध्रं ग्राह्यम्। स्त्रीणां देहे त्रीणि रन्ध्राणि अधिकानि। तत्र द्वेस्तनस्थे, एकं गर्भमार्गस्य। यथा-

नासानयनकर्णानां द्वे द्वे रन्ध्रे प्रकीर्तिते।

मेहनापानवक्त्राणामेकैकं रन्ध्रमुच्यते।।

दशमं मस्तके प्रोक्तं रन्ध्राणीति नृणां विदुः।

स्त्रीणां त्रीण्यधिकानि स्युः स्तनयोर्गर्भवर्त्मनः।। इति।

तत्र पङ्कजतुल्यं यद् बुद्धेः स्थानं तद् हृदयम्। हृदयादधः वामे भागे लोहितवाहिनीनां शिराणां यन्मूलं सप्लीहा मतः। प्लीहोऽधोभागे शोणितफेनजन्मा फुस्फुस नामधेयः स्मृतः। हृदयस्याधः दक्षिणदेशे यकृत् वर्तते, तच्च रज्जकपित्तस्या गृहम्।

यकृत् त्रयोदशाङ्गुलपरिमाणमुदीरितम्। पञ्चाङ्गुलं हृदयम्, यद्वयङ्गुलं तिलम्। फुस्फुसकं सप्ताङ्गुलं वदन्ति।

अस्मिन् शरीरे ...द्विधिकसप्ततिसहस्रानि(७२००) नाड्य सन्ति। तासां मध्ये वायुवहा दश नाड्यः श्रेष्ठाः। तासु दशस्वपि तिस्रो नाड्योऽतिश्रेष्ठाः। ता दश नाड्यश्चेमाः-इडासंज्ञकि नाडी नासिकाया वामे भागे स्थितास्ति। नासिकाया दक्षिणे भागे पिंगला नाम्नी नाडी वर्तते। नासिकाया मध्यदेशे तु सुषुम्ना नाडीस्थिता। दक्षिणे चक्षुषी गांधारी स्थिता, वामे कर्णे च यशंस्विनी नाडीस्थिता।। मुखे अलंबुर्षा नाडी पूषासंज्ञकि नाडी स्थिता। लिङ्गदेशे तु कुहसंज्ञकि नाडी स्थिता, मूलस्थाने च शंखिनीसंज्ञकि नाडी स्थिता इति। एतासु तिस्रः अतिश्रेष्ठाः। तद्यथा-इडा, पिंगला, सुषुम्ना इति। अस्मिन् शरीरे तत्तत्कर्मरादश वायवी विख्याताः। यथा-

प्राणोऽपानः समानश्चोदानो व्यानस्तथैव च।

नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः।। इति।।

त एव प्राणादयो दश वायवः प्राणायामाभ्यासेन वश्याः सन्तो निखिलाभीष्टप्रद भवन्ति।

चन्द्रादिनां स्थितिर्यथा-

इडायां संस्थितचन्द्रः पिंगलायां तु भास्करः।
सुषुम्नायां स्थितः शंभुः शंभोर्ह संखरूपता।। इति।

दिवारात्रौ श्वासप्रश्वासगतिश्चेत्थम्-

षट् शतानि दिवारात्रौ सहस्राण्येकविंशतिः। इति।

स्वाभाविकी गतिः प्रोक्ता श्वासप्रश्वासयोर्नृणां श्वासप्रश्वासयोः दिवारात्रौ एकविंशतिसहस्राणि षट् स्वाभाविकी गतिः प्रोक्ता। एवं स्थूलशरीरस्य निष्पत्ति भवति।

**सहायकग्रन्थसूची-**


१.गर्भोपनिषद्

२.वपुनिर्णयः

३.सांख्यतत्त्वकौमुदैः सांख्यभूमिका

४.चरकसंहिता

# वार्त्तिककारदृष्ट्या पौराणिकयोगस्वरूपम्

डॉ. पंकजकुमारतिवारी

वैदिकसाहित्ये पुराणानामतीव गौरवास्पदं स्थामस्ति । वेदतत्त्वार्थजातं सांख्येनावगमयितुमेव एवेषो प्रवर्तितम् । अत्रापि त्रिविधदुःखस्य निवृत्तये अनेकानेकोपायाः प्रतिपादिताः सन्ति । परञ्च चित्तवृत्तिनिरोधात्मकः योगः त्रिविधात्मकस्यात्यान्तिक निवृत्तये अन्यतमत्वेन उपायत्वेन उपस्थापितः अवलोक्यते । एतस्मदिव योगसूत्रभाष्यस्य तत्त्ववैशारद्याश्चात्यनसूक्ष्मभावबोधकेन वेदान्तिना विज्ञानभिक्षुणा वार्त्तिकानामात्मिकी टीका प्रवर्तिता । तत्र पुराणानामुद्धरणम् उद्धृताम् । यद्यपि पुराणेषु योगस्य प्रत्येक पक्षस्य विस्तृतविवरणम् उपलभ्यते तथापि वार्त्तिककारेण केवलं योग प्रशंसासम्बन्धिन्येव पौराणिकयोगसन्दर्भाः स्वटीकायां अलिखत् । इति एको विचारणीयः प्रश्नः ।

इति प्रश्नं दुरे तष्ठिन्तु यतो हि विषयानुसारमत्र योगस्वरूपं साङ्गं समीक्ष्यते । तस्मात् सर्वप्रथमः योगवार्तिककारस्य योगलक्षणम् । येन पौराणिक सन्दर्भाणां समीक्षणं कर्त्तव्यं वर्तते - यथा योगलक्षणं वार्त्तिककारस्य चिन्तान्तः करण सामान्यमेवास्यैतान्तः करणस्य वृत्तिभेदमात्रेण चतुर्धाऽवदर्शने विभागात् तस्य यावल्लङ्यमाणा वृत्तयस्तासां निरोधस्तासां लक्ष्यक्योऽधिकरणस्यैवावस्थाविशेषः अभावस्यास्मन्मतेऽधिकणावस्थाविशेषरूपत्वात् स योगः इत्यर्थः ।[१]अस्य योगलक्षणस्य व्याख्यात्येन्तस्पष्टत्वात् नैव क्रियते पौराणिकं योगस्वरूपं प्रतिपाद्यते यत् योगवार्त्तिके उद्धृतं वर्तते । यथा –

**विनिष्पन्न समाधिस्तु मुक्तिं तत्रैव जन्मनि ।**

**प्राप्नोति योगी योगाग्दिग्धकर्मचयोऽचिराद् ।।**[२]

अस्य श्लोकस्य सन्दर्भः यथा खण्डिक्यं राजा पृच्छति गुरूं केशिध्वज राजानं यत्, किं योगस्य स्वरूप कस्मात् कारणात् भवति, मनुष्याणां बन्धमोक्ष तदा वदति केशिध्वजराजा यत् विषयभोगासक्तिरेव बन्धो भवति तथा विषयेभ्यः मनसः चित्तवृत्तिणां वा निवर्तनं मुक्तिः योगफलात्मिकः । यतो हि सर्वत्र इदं प्रतिपादितं वर्तते यत् कैवल्ये योग एव हेतुः । चित्तवृत्तिनिरोधे जाते सति तस्मिन् ब्रह्मणि आत्मनि संयोग योगः इत्युच्यते। अनेन विनिष्पन्न समाधिना झटित्येन योगी मुक्त भवति यतोहि चिरकालाद् सञ्चितां कर्मणां योग ज्ञानाग्निदाहो जायते ।

मार्कण्डेयपुराणेऽपि इदमेव तात्पर्यं प्रतिपादितं योगारूढपुरुषस्य अज्ञानात् यो वियोगः तदेव योगः मुक्तिफलकः द्रष्टुः स्वरूपावस्थिततत्वरूपः प्रकृतिगुणसहितानैक्यात् एव ब्रह्मणाः आत्मनो वा साक्षात्कारः । योगस्य साक्षात्फलं दुखस्या त्यान्तिकनिवृतिरूपं कैवल्यम् । सम्यकज्ञानं योगः अज्ञाननिवृत्या सम्यग्ज्ञानस्यममतासक्तचित्तनैव दुःखस्य आविर्भावो भवति । तस्मात् मुमुक्षुत्वपुरुषेण यत्नेन दुःखनिवृत्तिः क्रियते । अर्थात् चित्तवृत्तीनां निरोधः क्रियते । विषयासक्तिपरत्यागेनैवाज्ञानस्वरूपात्मकस्य क्लेशजातदुःखस्य निवृतिर्जायते । अयं योगः द्विविधः सम्प्रज्ञातासम्प्रज्ञातभेदाभ्याम् ।

सम्प्रज्ञातयोगाव्याख्यायता वार्तिककारेण लिखितो, वर्तते यत् साक्षात्कारविषेष रूप वितर्कादिभिरनुगमाद् हेतो सम्यक् प्रज्ञातत्वेन योगः सम्प्रज्ञातनामा भवति । अर्थात् सम्यक् प्रज्ञायते साक्षात्क्रियते ध्येयम् अस्मिन् इति सम्प्राज्ञातः । तथा असम्प्रज्ञातसमाधिवर्णयता वार्तिककारेण प्रोक्तः यत् न किञ्चिद् प्रज्ञायते साक्षात्क्रियते ध्येयमे अस्मिन् इति असम्प्रज्ञातः ।[3]

मार्कण्डेयपुराणेऽपि एतयोः संकेतम् यथा –

**युञ्जीत योगी निर्जित्य त्रीन् गुणान् परमात्मनि ।**

**थन्मयश्चात्मना भूत्वा चिद्वृत्तिमपि संत्यजेद् ।।[4]**

अर्थात् निर्विकल्पं त्वात्मज्ञानं सम्प्रज्ञात्काल एव भवति शब्दार्थज्ञानविकल्पशून्यस्य सम्प्रज्ञात्काल एव भवति शब्दार्थज्ञानविकल्पशून्यस्य सम्प्रज्ञातकालीनज्ञानस्यैव निर्विकल्पकस्य लयस्य मानत्वाद् । त्रीन्

गुणान् युञ्जीत योगी निर्जित्य आत्मनः परमात्मनश्च साक्षात्कारम् अकरोत् । एतदेव सम्प्रज्ञातावस्था तदनन्तरं आत्मा भूत्वा तामपि अवस्थां परित्यजेद् इयमेव अवस्थआ निर्बीजनामक असम्प्रज्ञातयोगः ।

विष्णुपुराणस्य एकस्मिन् श्लोके योगस्यावस्था भेदेन संज्ञाद्वयं लभते यथा –

**योगयुक् प्रथमं योगी युञ्जानो ह्यभिधीयते ।**

**विनिष्पन्नसमाधिस्तु परं ब्रह्मोपलब्धिमान् ।।**[५]

प्रथमं युञ्जअजन योगः प्रकान्तो योग इत्यभिधीयते, साक्षात्कृतपरमात्मस्वरूपो विनिष्पन्नसमाधिपदवाच्यो भवति । ध्यानपर्यन्तसप्तायोगनिष्ठस्य योगयुक्तसमाधिः ।

एतयोः प्रथमः असम्प्रज्ञातयोगः यतोहि विनिष्पन्नसमाधौः सति मुक्तिः लभ्यते ।

इति एवं प्रकारेण योगद्वयं वार्तिककारदृष्ट्या पौराणिक योगस्वरूपं संक्षेपेण समीक्षितम् । यद्यपि अपराण्यपि उद्धरणानि प्राप्यन्ते योगस्वरूप विषयकानि तथापि किञ्चिदेव विस्तर भायात् उत्पादितानि इति।

## सन्दर्भ ग्रन्थसूची


१. **योगवार्तिक सूत्र सं २**

२. विष्णुपुराण ६/७/२४

३. योगसार संग्रह पृ.सं. ३०

४. मार्कण्डेयपुराण ४०/१

५. विष्णुपुराण ६/७/२६

# ब्रह्मण: जगत्कारणत्वं

डॉ. श्रद्धाञ्जलि महापात्र

सर्वेषु आस्तिकनास्तिकदर्शनेषु जगत्कारणविषये दृश्यते वह्वय: विप्रतिपत्तय:।तत्र माध्यमिका: शून्यवादिन:बौद्धा: सर्वं शून्यमिति वदन्ति। शून्यात् एवेयं सृष्टि: सम्भवति।योगाचारा:क्षणिकविज्ञानवादिन:विज्ञानमेवक्षणिकं तत: सर्वमुत्पद्यते इति ते वदन्ति।वैशेषिकदर्शनकार: महर्षिकणाद: परमाणुकारणवादं प्रतिपादयन्ति। नैयायिका: प्रपञ्चोत्पत्तये परमाणव उपादानकारणमीश्वर: निमित्तकारणमिति वदन्ति। सांख्यदर्शनस्य प्रवर्त्तक: महर्षिकपिल: प्रकृतिपुरुषयो: संयोगेनैव इयं सृष्टि: संभवति इति प्रतिपादयन्ति। योगदर्शनस्य प्रवर्तक: महर्षिपतञ्जलि: सांख्यदर्शनस्य तत्वं स्वीकुर्वन्ति।पूर्वमीमांसादर्शनस्य प्रवर्तक: महर्षिजैमिनि कर्मनियमानुसारं इयं सृष्टि: सम्भवति इति वदन्ति। वेदान्तदर्शनस्य समृद्धिकर्ता आचार्यशंकर: ब्रह्मण: जगत्कारणत्वं प्रतिपादयन्ति। निर्विशेषे निरवयवे चित्स्वरूपे ब्रह्मणि सावयवमचेतनं जगदिदं कल्पितभवतीति वदन्ति। दृष्टान्तमुखेनोच्यते- दृश्यते हि घटकार्यस्य उपादानकारणं मृद् निमित्तकारणं कुलालादय: इति।किन्तु वेदान्तिन: ब्रह्मण: अभिन्ननिमित्तोपादानत्वं स्वीकुर्वन्ति। यथा च श्रुति:-

''यथोर्णोनाभि : सृजते गृहणते च
यथा पृथिव्यांमोषधय: सम्भवन्ति।
यथा सत: पुरुषात्केशलोमानि
तथाक्षरात्सम्भवतीह विश्वम्।।[१]

तत्र ब्रह्मसूत्रस्य प्रथमाध्यायस्य चतुर्थपादस्य प्रकृत्यधिकरणे आचार्यशंकरेण विषयोऽयं स्पष्टीकुर्वन्ति। ननु इक्षापूर्वक: कत्तृत्वश्रवणात् ''स इक्षाञ्चक्रे''[२] ''स विषयोऽयं स्पष्टीकुर्वन्ति। ननु इक्षापूर्वक: कत्तृत्वश्रवणात् ''स इक्षाञ्चक्रे''[२]''स प्राणमसृजत''[३]इत्यादिश्रुतिवाक्येभ्य: इदं कत्तृत्वं निमित्तकारणेषु कुलालादिषु एव

दृष्टम्।तथैव सर्वज्ञस्य ईश्वरस्य निमितत्व एव सिद्धं भवति। न तु उपादानत्वम्। यतो हि अनेकाकारपूर्वकस्य अवयवसमन्वितस्य अशुद्धस्य अचेतनस्य जगत उपादानमेकं नित्यं शुद्धं चैतन्यस्वरूपं परब्रह्म भवितुं नार्हति ,कार्यकारणयोः वैषम्यदर्शनात् । तत्र श्वेताश्वेतरे ब्रह्मणः निष्कलनिष्क्रियत्वादिकं स्पष्टतया सूचयति।''निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्।''[४]। तस्मात् ब्रह्म जगतः केवलं निमित्तकारणं न वा उपादानकारणं न वा अभिन्ननिमित्तकारणम् इति पूर्वपक्षः। सिद्धान्तोऽयं भाष्यमुखेन स्पष्टिक्रियते आचार्यशंकरेण- ''प्रकृतिश्च उपादानकारणं च ब्रह्माभ्युपगन्तव्यं निमित्तकारणं च।न केवलं निमित्तकारणमेव।कस्मात्? प्रतिज्ञादृष्टान्तानुपरोधात्। एवं प्रतिज्ञादृष्टान्तौ श्रुतौ न उपरुध्येते। प्रतिज्ञातावत् 'उत तमादेशमप्राक्षो येन अश्रुतं श्रुतं भवति अमतं मतम् अविज्ञातं विज्ञातम्''[५]इति। तत्र च एकविज्ञातेन सर्वमन्यत् अविज्ञातमपि विज्ञातं भवति इति प्रतीयते, तचचोपादानकारणविज्ञाने सर्वविज्ञानं सम्भवति, उपादानकारणाव्यतिरेकात् कार्यस्य, निमित्तकारणं अव्यतिरेकस्तु कार्यस्य नास्ति,लोके तक्ष्णः प्रासादव्यतिरेकदर्शनात् । दृष्टान्तोऽपि ''यथासौम्य एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् ,वाचारम्भणं विकारो नामधेयं मृत्तिका इत्येवं सत्यम्।''[६]। इति।उपादानकारणगोचरे एव आम्नायते। तथा ''एकेन लौहमणिना सर्वं लौहमयं विज्ञातं स्यात्'',''एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्'',[७] इति च। तथा अन्यत्रापि ''कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति'', इति प्रतिज्ञा। ''यथा पृथिव्यामोषधयः सम्भवन्ति''[८]इति दृष्टान्तः। तथा ''आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम् ''इति प्रतिज्ञा,''स यथा दुन्दुभेर्हन्यमानस्य न वाह्यान् शब्दान् शक्नोयाद्ग्रहणाय, दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दः गृहीतः '',[९] इति दृष्टान्तः । ''एवं यथासम्भवं प्रतिवेदान्तं प्रतिज्ञादृष्टान्तौ प्रकृतित्वसाधनौ प्रत्येतव्यौ''[१०]।

प्रत्येतव्यौ''[१०]।

एवमेव ब्रह्म जगतः निमित्तकारणमपि-''सदेव सोम्येदमग्रासीदेकमेवाद्वितीयम् ''[११] इति सृष्टेः प्राक् एकमेवाद्वितीयमित्यवधारणात् ब्रह्मणः अतिरिक्तान्यस्य अविद्यमानत्वाचच पुनः तत्र ब्रह्मणः अतिरिक्तान्यस्य इक्षितृत्वासम्भवत्वं तत्रैव प्रतिज्ञादृष्टान्तमुखेन प्रतिपादयति। भाष्यमुखेनोच्यते आचार्यशंकरेण ''अधिष्ठातरि हि उपादानादन्यस्मिन् अभ्युपगम्यमाने पुनरप्येकविज्ञानेन सर्वविज्ञानस्यासम्भवात् प्रतिज्ञादृष्टान्तोपरोध एव

स्यात्।तस्मादधिष्ठात्रन्तराभावादात्मनः कर्तृत्वमुपादानान्तराभावाचच प्रकृतित्वम्।''[१२] । पुनश्च तत्र सृष्टिविषयकसंकल्प उपदेशेनैव आत्मनः निमित्तकारणत्वमुपादानकारणत्वञ्च ज्ञाप्यते। यथा तत्र तैतिरीयके ''सोऽकामयत बहुस्यां प्रजायेय''[१३]। ''तदैक्षत बहुस्यां प्रजायेय''[१४] इति।आभ्यां श्रुतिवाक्याभ्यां परमात्मनः स्वाधीनकर्त्तृत्वकथनेन परमात्मा एव निमित्तकारणमिति प्रतिपाद्यते। प्रसङ्गेऽस्मिन् सुत्रीयते सूत्रकारेण सूत्रम् ''अभिध्योपदेशाचच''[१५] इति। पुनश्च तत्र छान्दोग्ये ''सर्वणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति''[१६]। इत्यनेन श्रुतिवाक्येन ब्रह्मैव साक्षात् प्रभवप्रलययोःकारणमिति सूच्यते।इति ब्रह्मणः जगत्कारणत्वम्।

**सहायकग्रन्थसूची**


१. मु, उ-(१-१-७)
२.प्र.उ.(६-३)
३.प्र.उ( ६-४)
४.श्वे .उ.(६.१९)
५.छा-उ-(६-१-२)
६.छा.उ.(६-१-४)
७.छा.उ.(६-१-५/६)
८.मु.उ.(१-१-७)
९.बृ.उ.(४-५-६/८)
१०.ब्र.सू.(१-४-२३)
११.छा.उ.(६-२१)
१२.ब्र.सू.शा.भा(.१-४-२३)
१३.तै.उ.(२-६)
१४.छा-उ -(६-२-३)
१५.ब्र.सू.(१-४-१४)
१६.छा.उ.(१-९-१)



श्रीजगन्नाथ संस्कृतविश्वविद्यालयः

श्रीविहारः पुरी

# मार्कण्डेयपुराणदिशा योगतत्त्वानुशीलनम्

**डॉ. कृष्णचन्द्रकवि:**

प्राचीनवैदिकसाहित्यादारभ्य पुराण-धर्मशास्त्र-दर्शनशास्त्र-इतिहासकाव्यनाटकादिषु आधुनिकसत्साहित्येष्वपि सर्वत्र धर्मार्थकाममोक्षाणां चर्चा विलोक्यते। धर्मो ह्येव दृश्यमानप्रपञ्चस्य धारक: पालक: संचालकश्चेति मन्यते। अयं हि धर्म: भारतीयानां प्राणभूतोऽस्ति। स तु सत् ज्ञानेन व्यवहारेण च जायते । तस्मात् मनुना स्पष्टमुक्तम्-

**एतद्देशप्रसूतस्य सकाशादग्रजन्मन:।**

**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्व मानवा:।। मनु २य अध्याय:**

तत् धर्मस्यावाप्तये तत् तत् शास्त्रेषु बहुविधोपाया: सन्ति निरूपिता:। तेषूपायेषु योगोऽस्ति अन्यतम:। योगो धर्मस्याङ्गभूत इति प्रवदन्ति मनीषिण:। तदुक्तं याज्ञवल्क्येन **अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् (याज्ञवल्क्यस्मृति:)**। योगेन मनुष्य: सर्वमप्यसाध्यं साधयति दुष्प्राप्यमपि करतलगतं करोति तस्मात् योगस्य महिमा अनन्त: अपारश्चेति मन्यन्ते विपश्चित:। श्रीमद्भगवद्गीतायां भगवता जीवस्यात्यन्तिककल्याणाय द्विविधा निष्ठा परिकीर्त्तिता तयो: एका कर्मनिष्ठा अपरा च ज्ञाननिष्ठा। तत्र प्रथमा सांख्यानां द्वितीया च योगिनां कृते इति तत्रैव भगवता कथितम्।

**लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ!**

**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्।।**

भगवत: श्रीकृष्णस्य मतेन सांख्ययोगौ न पृथग्भूतौ अपितु तौ एकौ एव।

**सांख्ययोगौ पृथग्बाला: प्रवदन्ति न पण्डिता:।**

**एकमप्यास्थित: सम्यगुभयोर्विन्दते फलम्।।**

**यत्सांख्यैर्प्राप्यते ज्ञानं तद्योगैरपि गम्यते।। भ गीता**

एवं विविधेषु धर्मप्रतिपादकेषु शास्त्रेषु योगस्य महन्महत्त्वं वर्तते। तदस्माभि: अवश्यमेवानुसन्धेयम्।

**योगशब्दस्यार्थः व्युत्पत्तिश्च**

योजनं योगः समाधिः इत्यादयः पर्यायवाचिनः शब्दाः विलोक्यन्ते। व्याकरणशास्त्रदृष्ट्या युजिर् योगे इत्यस्मात् धातोः निष्पन्नमिदं पदम्। यस्यार्थः भवति संयोगः एकस्यापरेण सह मिलनं वा। योगवासिष्ठग्रन्थे वाल्मीकिना निरूपितं यत् चित्तनाशस्य द्वौ मार्गौ भवतः तत्रैकः योग अपरश्च ज्ञानं तद्यथा-

**द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव।**

**योगो वृत्ति निरोधो हि ज्ञानं सम्यगवेक्षणम्।।**

चेतसः बहुविधाः वृत्तयः सन्ति तासां निरोधः नियमनमितिकरणमेव योग इति उच्यते। किं च भगवता पतञ्जलिनापि निगदितं योगश्चित्तवृत्तिनिरोधः अर्थात् मानसिकवृत्तीनां नियमनमेव योगः। अस्य सूत्रस्य व्याख्यानं विदधता नागोजीभट्टेनापि विलिखितम्- **चित्तस्यान्तः करणस्य वक्ष्यमाणा या वृत्तयस्तासां निरोधः निवर्त्तनं योग इत्यर्थः। वृत्तिनिवर्त्तनं च जीवनयोनिप्रयत्नवदतीन्द्रियो यत्न विशेषं चित्तनिग्रहरूपो वृत्तिविलयहेतुः। चित्तवृत्तिसंस्कारजनकत्वानुपपत्तेः। अस्यापि योगस्य भेदौ द्वावपि कल्पितौ तौ यथा सम्प्रज्ञात -असम्प्रज्ञातौ च**

योगस्वरूपं निर्द्धारयता श्रीमद्भागवतकारेण प्रतिपादितं यत् मनसः विषयासक्तस्य निग्रह एव योगः चञ्चले मनसि योगसाधनं नैव स्यात्। एकादशस्कन्धे तितिक्षुब्राह्मणकथाप्रसङ्गावसरे तेनोक्तम्- **सर्वेमनो निग्रहलक्षणान्ताः परो हि योगो मनसः सामाधिः (श्रीमद्भा ११)** किं च योगं विवक्षता परमात्मना श्रीकृष्णेन **योगः कर्मसु कौशलम्, समत्वं योग उच्यते (गीता ०२/४८)**इति प्रतिपादयन् तस्य यत्नोपायान् एवं निर्दिशति-

**असंयतात्मना योगो दुष्पाप इति मे मतिः।**

**वश्यात्मना तु यतता शक्योवाप्तुमुपायतः।। गीता ६/३६**

विष्णुपुराणानुसारं पातञ्जलयोगसम्मतं मतं भिन्नं प्रतिभाति। अस्य पुराणस्य मतानुसारं मनसः स्वाभाविकी गतिः विषयेष्वेव भवति। सदा भौतिकविषयान् एव अभिलषति मनः परं तस्य एका विशिष्टागतिः वर्तते या यमनियमादिभिः वशीभूता भवति सा एव गतिः मनब्रह्मणोः संयोगं स्थापयति। पतञ्जलिना तु चित्तवृत्तिनिरोधः

योगेति कथित: अत्र तु परमात्मनि सम्बन्ध एव योग उक्तोऽस्ति। तदुक्तं यथा-

**आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगति:।**

**तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते।।वि.पु . ६/७/३१**

मार्कण्डेयमहापुराणं जीवब्रह्मणो: एकत्वं तत् प्राप्तिश्च योग इति आचख्यते। दत्तात्रेयालर्कसम्बादप्रसङ्गेऽयं विषय: विशेषरूपेण चर्च्चितोऽस्ति। तत्र राज्ञा अलर्केण पृष्ट: दत्तात्रेय: योगलक्षणमेवं विवृणोति-

**कथं न भूयां भूयश्च कथं निर्गुणतामियाम्।**

**कथं ब्रह्मणैकत्वं व्रजेयं शाश्वतेन वै।।**

**तन्मे योगं तथा ब्रह्मन् प्रणतायाभियाचते।**

**सम्यग् ब्रूहि महाप्राज्ञ सत्सङ्गो ह्युपकृन्नृणाम्।।**

**ज्ञानं पूर्वोवियोगो योऽज्ञानेन सह योगिन:।**

**सा मुक्तिब्रह्मणा चैक्यमनैक्यं प्राकृतै: गुणै:।। मार्कण्डेय३६/१९-२०**

**<u>योगाङ्गानि तद्भेदाश्च</u>**

पातञ्जलयोगदर्शने भगवता पतञ्जलिना योगस्यावष्टावङ्गानि स्वीकृतानि। तानि यथा यम-नियमासन-प्राणायाम-प्रत्याहार-धारणाध्यानसमाधयश्च तदुक्तं भगवता सूत्रकारेण पतञ्जलिना साधनपादे- **यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ।(पा.योग द साधनपाद: २९)**

एतेषां योगाङ्गानां सम्यगनुष्ठानेन शरीरजा: अशुद्धय: स्वयं नश्यन्ति ज्ञानस्य परिप्रकाश: जायते इति तेषां सम्मतम्। तदुक्तमस्ति- **योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानिप्तिराविवेकख्याते: (पातञ्जलयोगदर्शन साधनपाद: २८)**

विवेकमार्त्तण्डनामक: योगपरकग्रन्थ: योगस्य षडङ्गानि स्वीकरोति तद्यथा -

**आसनं प्राणसंरोध: प्रत्याहारश्च धारणा।**

**ध्यानं सामाधिरेतानि योगाङ्गानि वदन्ति षट्।। विवेकमार्त्तण्ड: १/६**

अस्य मतानुसारं यमनियमौ योगस्याङ्गभूतौ न भवत: इत्थं तेषां संख्या षड्भवतीति तेषामाशय: वैदिकवाङ्मयेऽपि योगस्य षडङ्गानि स्वीकृतानि सन्ति तानि यथा - प्राणायाम: प्रत्याहार: ध्यानं धारणा

तर्कसमाधिश्च। तदुक्तमस्ति **तथा तत्प्रयोगकल्पः प्राणायामः प्रत्याहारो ध्यानं धारणा तर्कः समाधिरित्युच्यते योगः। मैत्रायणी संहिता ६/१८**

विद्यमानेऽपि वैमत्ये विपश्चितः प्राधान्येन योगस्याष्टावङ्गान्येव स्वीकुर्वन्ति। योगाङ्गानामेतेषां साङ्गोपाङ्गविवेचनं पुराणेऽस्मिन् कृतमस्ति। तन्मयाधः आलोच्यते।

**यमाः**

अहिंसा सत्यम् अस्तेयम् अपरिग्रहः ब्रह्मचर्यञ्चैतानि पञ्चयमत्वेन परिगणितानि भवन्ति। यस्यानुपालनेन योगी स्वासाधनायां सिद्धः भवति स्वसाधनमार्गं प्रशस्तञ्च विदधाति। एतेषां पञ्चानां वर्णनमपि पुराणेऽस्मिन् विलोक्यते । केवलं भाषावैविध्येन वैचित्र्येण वा एतेषां स्वरूपलक्षणमत्र प्रतिपादितमस्ति।

**अस्तेयं ब्रह्मचर्यं च त्यागोऽलोभस्तथैव च ।**

**व्रतानि पञ्च भिक्षूणामहिंसा परमाणि वै ।। मार्कण्डेय ३८/१६**

**नियमाः**

योगदर्शने पवित्रता सन्तोषः तपः स्वाध्यायप्रणिधानानि इति नियमाः उक्ताः। एतेषां सम्यक् अनुष्ठानेन योगसाधनाय अधिकारी जायते। तदुक्तम्- **शौचसन्तोषतपः स्वाध्यायेश्वरप्रणिधानानि नियमाः। योगदर्शनम् २/३२**

मार्कण्डेयपुराणस्य मतानुसारं अक्रोधः गुरुशुश्रुषा शौचादयः नियमरूपेण गणिताः भवन्ति।

**अक्रोधः गुरुशुश्रूषा शौचमाहारलाघवम्।**

**नित्यस्वाध्याय इत्येते नियमाः परिकीर्त्तिताः।।मार्कण्डेय ३८/१७**

**प्राणायामः**

योगस्य प्रमुखाङ्गेषु चतुर्थस्थानं प्राप्नोति प्राणायामः । प्राणानामायामः संयमो वा प्राणायाम उच्यते। अर्थात् यस्मिन् कर्मणि श्वासप्राश्वासयोः संयमः क्रियते स भवति प्राणायामः तदुक्तं भगवता पतञ्जलिना- **तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः (योगदर्शन २/४९)**अर्थात् यमनियमादयः यदा साधिताः भवन्ति ततः श्वासप्रश्वासयोः गत्यवरोधः करणीयः। इयं हि क्रिया प्राणायाम इति कथ्यते। बहिःस्थितं वायुं यदा शरीरे प्रवेशयामः स भवति श्वासः पुनश्च अन्तः शरीरे स्थितस्य वायोः बहिनिष्कासनमेव प्रश्वासः इति गद्यते। अनयोः गत्यवरोधःप्राणायामशब्देनाभिधीयते। **बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः**

**परिदृष्टो दीर्घसूक्ष्मः ।(योगदर्शन २/५०)** मार्कण्डयपुराणस्य मतानुसारं प्राणायामैः शरीरजाः दोषाः नश्यन्ति यथा **प्राणायामैः दहेद्दोषान् (मार्क ३६/१०)** प्राणायामलक्षणं विवक्षता पुराणकारेणोक्तं यत्-

**प्रथमं साधनं कुर्यात् प्राणायामस्य योगवित्।**

**प्राणापाननिरोधस्तु प्राणायाम उदाहृतः।। मार्कण्डेय ३६/१२**

अयं प्राणायामः लघुमध्योत्तरीयभेदेन त्रिविधः जायते। तेषां लक्षणं यथा

**लघुर्द्वादशमात्रस्तु द्विगुणः स तु मध्यमः।**

**त्रिगुणाभिस्तु मात्राभिरुत्तमः परिकीर्त्तितः।।मार्कण्डेय ३६/१४**

येन प्रकारेण संनद्धः सिंहः प्रमत्तान् मृगगणान् मारयितुं समर्थः भवति परं सन्नद्धानां मानवानां मारणेऽकल्पः भवति तथैव प्राणवायुरोधने केवलं मनुष्याणां पापक्षयः भवति न तु शरीरस्य हानिः जायते। प्राणायामस्य अवस्थाचतस्रः ध्वस्ति प्राप्तिसंवित्प्रासादरूपेणात्र विवेचिताः सन्ति। तासामवस्थानां लक्षणं पुराणेऽस्मिन् पूर्णरूपेण वर्णितमस्ति। तद्यथा

**ध्वस्तिप्राप्तिस्तथासंवित् प्रसादश्च महीपते।**

**स्वरूपं श्रुणु चैतेषां कथ्यमानमनुक्रमात्।।मार्कण्डेय ३६/२१**

**प्रत्याहारः**

स्वविषयसंङ्गसहितः यदा योगी इन्द्रियाणां चित्तस्वरूपेऽवस्थानमेव प्रत्याहारः उच्यते। तदुक्तं पतञ्जलिना **स्व विषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः।(योगदर्शनम् २/५४)** यया क्रियया योगसाधकः शब्दस्पर्शादिभ्यः इन्द्रियविषयेभ्यः इन्द्रियाणि प्रत्याहरन्ति सः प्रत्याहारः स्मृतः। एतल्लक्षणं मार्कण्डेये इत्थं प्रदर्शितमस्ति।

**शब्दादिभ्यः प्रवृत्तानि यदक्षाणि यतात्मभिः।**

**प्रत्याह्रीयन्ते योगेन प्रत्याहारस्ततः स्मृतः।।मार्कण्डेय ३६/४२**

अस्याः क्रियायाः स्वरूपं योगिभिः इत्थं निरूपितं यत् अनया योगीव्याधिरहितः जायते । जलार्थी नालेन यथा धैर्येण जलं पिवति तथा योगी जितश्रमः वायुं पिवति।

**येन व्याध्यादयो दोषाः न जायन्ते हि योगिनः।**

**यथा तोयार्थिनस्तोयं यन्त्रनालादिभिः शनैः।।**

**आपिवेयुस्तथा वायुं पिवेद्योगी जितश्रमः।।मार्क ३६/४४**

लघुर्द्वादशमात्रस्तु द्विगुणः स तु मध्यमः।

त्रिगुणाभिस्तु मात्राभिरुत्तमः परिकीर्त्तितः।।मार्कण्डेय ३६/१४

येन प्रकारेण संनद्धः सिंहः प्रमत्तान् मृगगणान् मारयितुं समर्थः भवति परं सन्नद्धानां मानवान् मारणेऽकल्पः भवति तथैव प्राणवायुरोधने केवलं मनुष्याणां पापक्षयः भवति न तु शरीरस्य हानिः जायते प्राणायामस्य अवस्थाचतस्रः ध्वस्ति प्राप्तिसंवित्प्रासादरूपेणात्र विवेचिताः सन्ति। तासामवस्थानां लक्ष पुराणेऽस्मिन् पूर्णरूपेण वर्णितमस्ति। तद्यथा

ध्वस्तिप्राप्तिस्तथासंवित् प्रसादश्च महीपते।

स्वरूपं श्रुणु चैतेषां कथ्यमानमनुक्रमात्।।मार्कण्डेय ३६/२१

**प्रत्याहारः**

स्वविषयसंङ्गसहितः यदा योगी इन्द्रियाणां चित्तस्वरूपेऽवस्थानमेव प्रत्याहारः उच्यते। तदुक्तं पतञ्जलिन **स्व विषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः।(योगदर्शनम् २/५४)** यया क्रियय योगसाधकः शब्दस्पर्शादिभ्यः इन्द्रियविषयेभ्यः इन्द्रियाणि प्रत्याहरन्ति सः प्रत्याहारः स्मृतः। एतल्लक्षण मार्कण्डेये इत्थं प्रदर्शितमस्ति।

शब्दादिभ्यः प्रवृत्तानि यदक्षाणि यतात्मभिः।

प्रत्याह्रीयन्ते योगेन प्रत्याहारस्ततः स्मृतः।।मार्कण्डेय ३६/४२

अस्याः क्रियायाः स्वरूपं योगिभिः इत्थं निरूपितं यत् अनया योगीव्याधिरहितः जायते । जलार्थी नालेन यथा धैर्येण जलं पिवति तथा योगी जितश्रमः वायुं पिवति।

येन व्याध्यादयो दोषाः न जायन्ते हि योगिनः।

यथा तोयार्थिनस्तोयं यन्त्रनालादिभिः शनैः।।

आपिवेयुस्तथा वायुं पिवेद्योगी जितश्रमः।।मार्क ३६/४४

**धारणा**

योगस्य प्रमुखेषु अङ्गेषु धारणा अन्यतमा । इयं धारणा योगस्य षष्ठ-अङ्गरूपेण स्वीक्रियते योगिभि:। अस्या: लक्षणं प्रतिपादयन् पतञ्जलिना उक्तम् एकस्मिन् देशविशेषे मनस: स्थैर्यमेव धारणा इति । **देशबन्धश्चित्तस्य धारणा (योगदर्शनम् ३/१)**लक्षणमिदं पुराणेऽस्मिन्नपि स्वीकृतमस्ति। धारणाभि: पापराशय: नश्यन्तीति पुराणस्यास्य मतम् । **धारणाभिश्च किल्विषम्(मार्क ३६/१०)**पुनश्च तत्रैव उक्तमस्ति धारणेत्युच्यते चेयं धार्यते यन्मनो यया। मार्क ३६/४१ इयं धारणा द्विविधा इति अत्र प्रतिपादिता स्ति। अनया योगी योगयुक्त: स्वस्थ: सन् सर्वान् विनाश्यन् परं ब्रह्म विक्षते।

विष्णुपुराणानुसारं समस्तशक्तीनामाधार: स्वयं परमात्मा विष्णुरेवास्ति। तत्रैव चेतस: सम्यगवस्थानं धारणा इति निगद्यते। एवं प्रकारेण पुराणेऽस्मिन् धारणाया: स्वरूपमुपलभ्यते।

**तस्मात् समस्तशक्तीनामाधारे तत्र चेतस:।**

**कुर्वीत संस्थितिं सा तु विज्ञेया शुद्धधारणा।। वि.पुराण ६/७/७५**

अनया योगी अमूर्तस्येश्वरस्य स्वरूपचिन्तने समर्थ: भवति। अस्यां परिस्थितौ साधक: अव्यक्तस्य तस्य विविधानि आभरणानि देदीप्यमानं स्वरूपं च चिन्तयति।

**ध्यानम्**

योगस्य सप्तमाङ्गो भवति ध्यानम्। तत्र **प्रत्ययैकातानता ध्यानम्** अर्थात् पूर्वोक्तध्येयवस्तुनि चित्तवृत्ते: एकतानता एव ध्यानम् इति योगदर्शनकारेण सूत्रितम्।विष्णुपुराणं ध्यानस्य लक्षणमित्थं प्रतिपादयति तद्यथा

**तद्रूपप्रत्यया चैका संततिश्चान्यनि:स्पृहा।**

**तद्ध्यानं प्रथमैरङ्गै: षड्भिर्निष्पाद्यते नृप।। विष्णुपुराणम् ६/७/९१**

यस्मिन् परमेश्वरस्य स्वरूपप्रतीति: भवति वैषयिकीस्पृहा नैव जायते । ईश्वरीयचिन्तनस्यानवरतधारा: प्रावाहिता भवति तत् ध्यानमित्याचक्ष्यते। यमनियमादिभ्य: षड् अङ्गेभ्य: ध्यानं निष्पादितं भवति।

**समाधि:**

समाधिलक्षणं विवक्षता पतञ्जलिना कथितं यत् तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधि: (योगदर्शनम्३/३) यदा ध्येयवस्तुन: सर्वथा प्रतीति: भवति तत् स्वरूपे एव यदा योगी अवतिष्ठते तं

समाधि: इति कथ्यते। पुराणान्यपि अस्य स्वरूपमित्थं वर्णयन्ति-

**तस्यैव कल्पना हीनं स्वरूपं ग्रहणं हि यत्।**

**मनसा ध्याननिष्पाद्यं समाधि: सोऽभिधीयते।। विष्णुपुराणम् ६/७/९२**

**योगिन: दिनचर्या**

दिनचर्या योगमार्गानुयायिनां कृते फलदायिका वर्तते।अनया एव योगिन: स्वसाधनायां सिद्धा: भवन्ति। योगिनां दिनचर्या कथं भवेत् एतस्मिन् विषये पुराणेऽस्मिन् विपुला चर्चा विलोक्यते।अस्य मतानुसारं योगी द्वौ मानापमानौ त्यजेत्। एतौ नृणां प्रत्युद्वेगकरौ परं योगिनां सिद्धिकारकौ भवत: ।साधकानां कृते मानापमानौ यथा क्रमं विषामृते भवत: तदुक्तम्-

**मानापमानौ यावेतौ तावेवाहुर्विषामृते।**

**अपमानोऽमृतं तत्रमानस्तु विषमं विषम्।। मार्कण्डेय ३८/३**

योगी सदा विषयेषु चक्षुपूतं पादं न्यसेत् वस्त्रपूतं जलं पिवेत् सत्यपूतां वाचं वदेत् मन:पूतं कार्यं च समाचरेत्।योगवित् कथमपि श्राद्धयज्ञादिषु भैक्ष्यसिद्ध्यर्थं न गच्छेत्। सदा व्यस्ते विधूमे व्यङ्गारे सर्वस्मिन् भुक्तवत् जने भैक्ष्यं समाचरेत्। शालिनेषु गृहस्थेषु सदा भैक्ष्यं चरन् सकृदप: पूर्वं प्राश्य तूष्णीं भूत्वा प्राणापानादिभि: मन्त्रै: पञ्चवारान्नप्राशनं कुर्यात्। वाग् दण्ड: कर्मदण्ड: मनोदण्डश्चैते त्रयोदण्डा: यस्य सन्ति स त्रिदण्डी सन्यासी कथ्यते। तदुक्तम्-

**वाग्दण्ड: कर्मदण्डश्च मनोदण्डश्च ते त्रय:।**

**यस्यैते नियता: दण्डा: स त्रिदण्डी महायति:।। मार्कण्डेय ३८/२२**

गुणरहितस्य योगिन: न कोऽपि प्रिय: द्वेष्यश्च भवति अत: सर्वथा ध्यानेन ईश्वरस्य चिन्तनं कृत्वा समलौष्ठाश्मकाञ्चनो भवेत् इति पुराणेऽस्मिन् योगिदिनचर्या प्रतिपादितास्ति ।

**योगसाधनायां विघ्नानि**

योगधारणायां नैकानि विघ्नानि समायान्तीति पुराणमिदं विवृणोति।विशेषत: काम्यक्रियया एव विघ्नानि आपतन्ति अत: फलासक्तियुक्तां क्रियां सर्वथा विवर्जयेत् ।

**स्त्रियो दानफलं विद्यां मायां कुप्यं धनं दिवम्।**

**देवत्वममरेशत्वं रसायनवय: क्रियाम्।।**

**मरुत्पतनं यज्ञं जलाग्न्यो वेशनं तथा।**

**श्राद्धानां सर्वदानानां फलानि नियमांस्तथा।।**

**तथोपवासपूर्त्ताच्च देवताभ्यर्च्चनादपि।**

**तेभ्य तेभ्यश्च कर्मभ्य उपसृष्टोऽभिवाञ्छति।।**

**चित्तमित्थं वर्त्तमानं यत्नाद्योगी निवर्त्तयेत्।। मार्कण्डेय ३७/२-५**

योगिन: योगविघ्नाय पञ्चउपसर्गा: प्रवर्तन्ते तेषां प्रभावेण साधकस्य योगमार्ग: प्रनष्ट: भवति । ते एपसर्गा: यथा -

**प्रातिभो श्रावणो दैव भ्रमावर्त्तो तथा परौ।**

**पञ्चैते योगिनां योगविघ्नाय कटुकोदया:।।**

एवमस्मिन् पुराणे योगसाधनस्य सर्वेऽपि विषया: विस्तरश: चर्चिता: सन्ति। अस्यध्ययनेन योगस्य मूलभूतानि तत्त्वानि गूढ़रहस्यं च पाठकानां सम्मुखमागमिष्यन्ति। येन संसारेऽस्मिन् प्रवर्द्धमाना: रोगहिंसासूयादय: स्वयमेव नाशमेष्यन्ति। जगच्च चिरमैत्रिशान्त्यादिभिरन्वितं भूत्वा विविधै: आधिदैविकाधिभौतिकाध्यात्मिकादिभि: उत्पातै: रहितं च भविष्यति इति दिक्

पुराणेतिहासविभाग:

श्रीसदाशिवपरिसर:, पुरी, कला:

# सांख्ययोगयो: दु:खनाशनम्

मीनाक्षीमीना

जगति सर्वे मनुष्या: सुखं कामयन्ते। दु:खलेशमपि अकामयन् तन्निराकरणोपायं च चिन्तयति दु:खानि सामान्यत: त्रिविधानि भवन्ति। तानि च आध्यात्मिकाधिभौतिकाधिदैविक नाम्ना व्यवह्रीयन्ते। यत्रोच्यते–

दु:खत्रयाभिधाताज्जिज्ञासा तदपघातके हेतौ।

दुष्टे साऽपार्था चेन्नैकान्ताऽत्यन्ततोऽभावात्[१] ।।इति।

दु:खत्रयाभिघातात् दु:खं तावत् त्रिविधम् आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकञ्च तत्रात्म्यधिकृत्य जायमानं दु:खमाध्यात्मिकम्, तद् द्विविधं शारीरं मानसं च। शारीरिकं दु:खं वातपित्तकफादीनां वैष्यम्यादुत्पन्नं ज्वरादिसारादिकः प्रियवियोगादिसयोगजन्यं च मानसम्। भूतानि प्राणिनोऽधिकृत्य जायमानं मनुष्यपशुपक्षिदंशमशकमण्डुकंकरसर्पदिसमुद्भवमाधिभौतिकम्। देवानामधिकृत्य जायमानमाधिदैविकं देवदानवयक्षराक्षासभूतप्रेतपिशाचग्रहद्यावेत्यनिबन्धनम् एतेषां दु:खानां निराकरणं लौकिकैरूपायै: सामान्यत: यद्यपि सम्भवति तथापि आत्यन्तिकदु:खनिवृत्यर्थं मोक्षमार्गप्रदशनार्थं च योगशास्त्रमत्यन्तमुपकरोति। इदं योगदर्शनं सांख्यस्यापरनामधेयं भवति। यद्यपि प्रागेव हिरण्यगर्भादिभि: उपदिष्टमासीत्। तथापि मुमुक्षाणाम् अनुग्रहणार्थं सुलभरीत्या तत्रत्वावगहनार्थं योगसूत्रं महर्षिपतञ्जलिव्यरचयन्।

पुनश्च **परिणामतापसंस्कारदु:खगुणवृत्तिविरोधाच्च दु:खमेव सर्वं विवेकिन:** यथा **दु:खदौर्मनस्याङ्गमेजतत्त्वश्वासप्रश्वासविक्षेपसहर्भुव:**[२]। दु:खमाध्यात्मिकाधिभौतिकमाधदैविकं च। येनाश्रिहता: **प्राणिनस्तदघाताय प्रयतन्ते तद् दु:खम्**[३]। आत्मनं दौर्मनस्यमिच्छाविचाताच्चेतस: क्षोभ:[४]। यदङ्गान्येजयति कम्पयति तदङ्गमेजयत्वम्। प्राणो यद् बाह्यं वायुमात्रामति स श्वास:। यत्कोष्ठ्यं वायुं नि:सरति स प्रश्वास:। एते विक्षेपसबभूव: विक्षिप्तश्चत्तस्येते न भवन्ति।

क्लेशमूल: कर्माशयो दृष्टादृष्टजन्यवेदनीय:[५]।

दृष्टादृष्टजन्मनी वर्तमानभविष्यती भोगकर्माशयो धर्माधर्मौ तौ च दृष्टजन्मभोगौ वा अदृष्टजन्मभोग्यौ वोभ्ययथैव क्लेशमूलकौ क्लेशे सत्येव भवत इत्यर्थ:।

यस्य नाहंकृतौ भावे बुद्धिर्यस्य न लिप्यते।

हत्वाऽपि सा ईमालं लोकान्न हन्ति न निबध्यते।।

सतिमूले तद्विपाको जात्यायुर्भोगा: क्लेशरूपे कर्माशयस्य मूले जात्येव कर्माशयस्य विपाक: फलं भवति क्लेशाश्च, वासनारूपा एव जन्मदिविपाक कारणं विपाकस्य स्वरूपमाह।

जात्यायुर्भोगा। जातिजन्म:, आयुजीवन काल:, भोग: सुखदु:खात्मकशब्दादि वृत्तिरित्यर्थ: न तु सुखदिसाक्षात्कार एवात्र भोग:। ज्ञानाग्नि: सर्व कर्माणि भस्मसात्कुरूतेऽर्जुन। इत्यादि वाक्येभ्यो हि ज्ञानस्य क्लेशक्षयहेतुत्वात् कर्मक्षयहेतुत्वमपि सिद्धम्।

अत्रोच्यते– विविधयोनि हेतु शुभाशुभ कर्मसु सत्सु यत्र रागादिरत्नकाल उद्बुद्ध तिष्ठति। यथा गीतायाम्–

पुरुष: प्रकृतिस्थो हि भूंङक्ते प्रकृति जान् गुणान्।

कारणं गुणसङ्गोस्य सदसद्यो निजन्मस्विति।।इति।

न्यायसूत्रं च वीतरागजन्मादर्शनाम् नरकदिष्वपि रागद्यनुसारेणेव विपाको भवति, निषिद्धस्यादिसक्तानामेव तप्तलोहमय नारी समालिङ्गनादि फलं श्रवणात् अत: क्लेशोऽपि स्वतन्त्रेण विपाकारम्भै हेतु: ज्ञानोत्तरं चारब्ध विपाक: समाप्यत् एव नत्वारभ्यत् इति न तत्र क्लेशा अपेक्षेति।

गीताविष्णुपुराणयो ज्ञानयोगाभ्यां कर्मणा दाह एव श्रूयते। न तु नाश इति, तदेक वाक्यतया च क्षीयन्ते चास्य कर्मणीत्यादि वाक्यान्यापि उदाहरण्येव तथा तदधिगम। ब्रह्मसूत्रेऽपि विनाशशब्दो निष्पलताऽर्थक एव मन्तव्य:, कर्मण: नाशस्तु ज्ञानवासना नाशवत् चित्तनाशादेव भवति। धर्मनाशस्य धर्मनाशहेतुताया: सामान्यत एव क्लृप्तत्वादिति। यथा– स्वप्ने मन: प्रधाने चित्तक्रिया च तदूप: सुखदु:खभोगश्च तद्वत् तदनन्तरमवशिष्टात् स्थूलदेहारम्भकात् कर्माश्यात् स्थूलकर्मदेहधारणं स्यात् स्थूलसूक्ष्मदेहानामायुस्तथाऽऽयुषि सूखदु:खमोहभोगश्च तत्कर्माशयादेव भवति, स्थूलजन्मन्यत्युत्कटै: पुण्यपापै: द्रुष्टजन्मवेदनीया वायुर्भोगाऽपि स्याताम्। उक्तं क्लेशमूलत्वं कर्मण: कर्ममूलत्वञ्च विपाकानाम् अथ विपाका: कस्य मूलं। इत्यत्र आह– ते ह्लादपरितापफला: पुण्यापुण्यहेतुत्वात्[६]। ते विपाकासर्व एव समुचितपुण्यपापहेतुकत्वा– दित्यर्थ: अत्र सुखावच्छेदेन पुण्यहेतुका दु:खावच्छेदेन पापहेतुका[७] इति। दु:खं प्रतिकूलात्मकमेव विषयसुखकालेऽपि दु:खमस्येव प्रतिकूलात्मकं योगिन:। पुण्यं यमनियमादयादानानि तद्धेतुका जात्यायुर्भोग: सूखफला अनुकूलवेदनीया भवन्ति,

सुखात्यभोगाज्जन्मायुषी प्रार्थनीये इत्यर्थः तद्वीपरीता अपुण्यहेतुकाः अनुकूलात्मसुखमपि विवेकिभिर्योगिदुःखपक्षे निःक्षिप्यते वक्ष्यमाणेन हेतुना[८]।

परिणामसंस्कारदुःखैगुणवृत्ति विरोधाच्च दुःखमेवसर्वं विवेकिनः।

परिणानेत्यादि विवेकिन इत्यन्तं सूत्रं परिणामश्च, तापश्च, संस्कारश्च, एतान्येव दुःखानि इति, परिणामदुःखतया विषयसखस्य दुःखतामाह— सर्वस्ययम् इति न खलु सुखं रागानु वेध्यमन्तरेण सम्भवति न ह्यस्ति सम्भवो न तत्र तुष्यति रागजः कर्माशयः असतोऽनुपजनानात् तदा च सुखं भुञ्जानस्तत्र सत्ता –

विच्छिन्नावस्थेन ईषेण दुःखसाधनानि, **तानि परिहतुं** चेति।

**विषयसुखं चाविद्या इतश्च सर्वं दुःखमेव, अविद्यात्वात् विषयसुखस्य अविवेकप्रात्ययात्मको हि विषयसुखानुभवः। परिणामदुःखता या भोगेष्विनद्रियाणां तृत्पेरूपशान्तिस्तत् सुखम्। या दनुपशान्तिस्तद् दुःखम्। न चेन्द्रियाणां योगाभ्यासेन कर्तुं शक्यम्? यतो योगा बिबदर्धन्ते रागाः कौशलानि चेन्द्रियाणामिति, तस्यादनुपायः सखस्य योगभ्यास इति, सखल्वयं वृश्चिकविषयीतइवाशीविषेण दृष्टः। यः सुखार्थिविषयानुवासितो महति दुःखपङ्के निम्नग्नः इति, एषा परिणामदुःखानाम् प्रतिकूलासुखावस्थायामपि योगिनमेव क्लिश्नाति[१०]। तापदुःखता— सर्वदुःखद्वेषानुविद्धश्चेतनाचेतन साधनाधीना स्तापानुभव इति तत्रास्ति ईषेणः कर्माशयः। सुखमाधनानि च प्रार्थयमानः कार्येन वाचा मनसा च परिस्पन्दते, ततः परमानुगृहपिडाभ्याम् धर्माधर्मवुपाश्चिनोति स्त कर्माशयो लोभान्मोहाश्च भवति। येषां तापादुःखोच्यते।**

**गुणवृत्तिविरोघाच्च दुःखमेव सर्व विवेकिनः प्रख्याप्रवृत्तिस्थितिरूपा बुद्धिगुणाः परस्परानुग्रह तन्त्रा भूत्वा शान्तं– घोरं– मूढं वा प्राप्यं त्रिगुणमेवारभ्यते चलं च गुणवृत्तिमिति क्षिप्रपरिणामि श्चित्तमुक्तम् रूपादिशया, वृत्यतिशयाश्च परस्परेण विरूध्यन्ते। सामान्यानि अतिशयेन सह प्रवर्तन्ते। एवमेते गुणा इतरेतराश्रयेणोपरर्जितसुखदुःखमोह प्रापया इति सर्वरूपा भवन्ति[११]। यथा – चिकित्साशास्त्रम् चतुर्वहारोग रोगहेतुः आरोग्यं भैष्यज्यामिति, एवमिदमपि शास्त्रं चतुर्व्युहिण तद्यथा— संसारः संसारहेतुः मोक्षोपाय इति। तत्र दुःखबहुलसंसारे हेयः, प्रधानपुरुषयोः संयोगः हेयहेतुः, संयोगस्यात्यन्तिकीनिवृत्ति इति हानोपायः सम्यग्दर्शन भावहेतु।**

तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनपुरुषः।

लिङ्गस्याविनिवृत्तेस्तस्माद् दुःखं स्वभावेन[१२]।।

तत्र सरीरादौ, यद्यपि विविधा विचित्रानन्दयोगोयोगिन: प्राणभृद्भेदा तथापि सर्वेषां जरामरणकृतं दु:खम् अवशिष्टम्, सर्वस्याखलु कृतेरपि मरणमात्रे मा न भूवम् , भूयासम् इत्येवमात्मकोऽस्ति, दु:खं च भयर्हतुरिति मरणं दु:खम्[१३]।

यावदिदं लिङ्गं न निवर्तते तावदवश्यं दुखेन भवितव्यम्। समानं जरामरणादिजंदु:खम्[१४] ब्रह्मादिस्थावरान्तानां सर्वेषामेव जरामरणादिकं दु:खं माधारणमतोऽपि हेय इत्यर्थ:-

दु:खत्रयाभिघातजिज्ञासातदपघातके हेतौ।
दृष्टे सापार्था चेन्नैकान्तात्यन्तोऽभावात्।।
दृष्टवदानुश्रविक: स हेयविशुद्धिक्षयातिशययुक्त:।
तद्वपरित: श्रेयान् व्यक्ताव्यक्ताज्ञविज्ञानात्।[१५]

यथा– दु:खं त्रिधा विभक्तम्, आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकं च। आध्यात्मिकदु:खं शारीरिकं मानसिकं च द्विविधम्। शरीरमधिकृत्य यदु:खम् भवति तद् शारीरिकदु:खम् यथा– ज्वरादिभ्यो यदु:खं भवति प्रियवियोगाऽप्रियसंयोगाद् यदु:खमनुभूयते तस्मान्मानसिकदु:खम्।

भूतत्याधिकृत्य दु:खं भवति तदाधिभौतिकं दु:खं भूर्तं चतुर्विधम्, जरायुजं, अण्डजं, स्वदेजम्, उद्भिज दैवम् अधिकृत्य यथा– अग्न्युत्पातात् , जलोत्पलवात्त, वज्रपाताद् , दु:खम् आधिदैविकम्।

अत्र सौद्धान्तिका: उच्यन्ते– दुश्यपाया: न ऐकान्तिकरूपेण न वा आत्यन्तिकरूपेण दु:खं माशायितुमर्हन्ति, अतएव दु:खविनाशार्थं जिज्ञासा करणीया एव।

तद्यथा– दु:खाना विनाशार्थं यदालौकिकै: दृश्योपायानां प्रयोग: क्रियते तदा वैदिकमुपायम्। कामं लौकिकेरूपायैदु:खानामात्यन्तिकी विनाशो मास्तु। परन्तु अनुभवे दु:खस्य आत्यन्तिकविनाश: स्यादात्यनी तच्च सांख्यम्।

तदेवत् प्रायात्मवेदनीयं दु:खं रज: परिणायभेदो न शक्यते प्रायारधातुम्, तदेनेन दु:खान्त:कारणवर्तिना चेतनं शक्यते। प्रतिकूलवेदनीय न दृष्टात तित्सिद्धिनिवृत्तिदर्शनात् प्रात्यहिकक्षुत्र तत्प्रतीकारचेतनाव पुरुषार्थत्वम्[१६]।

लौकिकादुपायाद्धानादरेरात्यन्तदु:खनिवृत्तिसिद्ध नास्ति। कुत: श्वनादिना दु:खे निवृत्तेपश्चाद्धननादिक्षरो पुनरपि दु:खानिवृत्ति दर्शनादित्यर्थ:। तथा श्रुति:– अमृतत्वस्य तु नाऽऽशांस्ति वित्तेन[१७] इत्यादि।

कुत्र जरशौचादकिमव्यापातदुःखनिवर्तकतया मन्दपुरूषाथी भवत्येवेति।

नानुश्रविकादपि तत्सिद्धिः सहात्येनावृत्तिः योगादपुरुषार्थत्वम्। तत्र प्रायविवेकस्यानिवृत्तिः वृत्तिः। दुःखाद् दुःखं जलाभिषेक[१८]।

## सन्दर्भ ग्रन्थसूची


१. सांख्यकारिका

२. योगसूत्रम् – १-३

३. योगभाष्यम् – १-३

४. योगदीपिका – १.३, पृ. ५०

५. यो.ग.द – २-१२

६. यो.सू – २-१४

७. योगवर्तिकम् - २-१४, पृ - १७५

८. भास्वती.टी – पृ. १७६

९. या.सू – २-५

१०. यो.सू – २-१५ भाष्यम्, पृ. १८४

११. यो.सू. भ्या – २-१६, पृ.१८४

१२. सां.का – ५५

१३. सां.त.कौ – पृ.५५,५८

१४. सां.प्र.भा – ३-५३

१५. सां.का – २

१६. सां.प्र.भा – १-२.३

१७. सां.प्र.भा – १- ३

१८. सां.सू – ८२.८५



अनुसन्धात्री

सांख्ययोगविभागः

श्रीसदाशिवपरिसरः, पुरी

# साम्प्रतिकसमाजे समाधियोगस्य स्वरूपम्

**मधुसूदनदासः**

**योगेन योगे ज्ञातव्यो योगे योगात् प्रवर्तते ।**

**योऽप्रमत्तस्तु योगेन स योगे रमते चिरम् ।।**[१]

आधुनिकयुगे योगशास्त्रस्य महती आवश्यकता वर्तते। किञ्च योगशास्त्रं तु मानवानां शारीरिक-मानसिक-आध्यात्मिकोपकारार्थमत्यन्तं प्रयोजनीयं वर्तते। तदेव महर्षिपतञ्जलिना योगशास्त्रस्य समाधिपादे आदौ लिख्यते - **योगश्चित्तवृत्तिनिरोधः**[२]। योगशास्त्रस्य तत्त्वं न केवलं पातञ्जलशास्त्रे वर्तते अपि तु महाभारत-रामायण-वेदोपनिषद्-पुराणादिष्वपि योगतत्त्वस्य महिमा परिलक्ष्यते एव **योगः समाधिः। स च सार्वभौमश्चित्तस्य धर्मः।**[३] प्राचीनवाङ्गमये योगशब्दः विभिन्नेषु अर्थेषु व्यावह्रियते स्म। तद्यथा **युजिर योगे** इति धातोः कर्तरि **घञ्** – प्रत्ययेन निष्पन्नस्य योगशब्दस्यार्थः वर्तते संयोगः। यथा – **जीवात्मापरमात्मानोः संयोगे योगः। सूर्यचन्द्रमसोः संयोगः योगः । शिवशक्ति सामरस्यं योगः।** गीतायामपि अनेकानि निर्वचनानि दृश्यन्ते यथा - **समत्वं योग उच्यते। योगः कर्मसु कौशलम्**[४]। **सर्वकर्मसंन्यासपूर्वकं भगवत्यतत्यतत्परता योगः। मनो वाक्क्यायकर्मभिरात्मशुद्धये कर्म सम्पादनं योगः। आत्मवत् सर्वत्र सुखानुभूतिः योगः।**

तत्र युज समाधौ इति धातोः निष्पन्नयोगशब्दः एकाग्रतार्थवाचकः। भगवता पतञ्जलिना योग सूत्रे - **योगचित्तवृत्तिनिरोधः**। इत्येकं सरलं सुस्पष्टं च योगशब्दस्य लक्षणं कृतम्। यद्यपि भगवत्मुखनिर्गतानां लक्षणानां पतञ्जलिकृतलक्षणेन स परस्परं समन्वयो न स्पष्टं प्रतीयते तथापि भगवता कृष्णेन क्वचित्कर्मयोगस्य, क्वचिद् भक्तियोगस्य क्वचिद् ज्ञान योगस्य क्वचिद् पातञ्जलयोगस्य महत्त्वमुपवर्णितम्, अतः नास्ति विरोधः। एवमेव पुराणेष्वपि योगशब्दस्य निर्वचनमुपलभ्यते। तथा शिवपुराणे चित्तवृत्तिनिरोधाख्यं योगतत्त्वं निगद्यते। लिङ्गपुराणेऽपि-

**सर्वार्थज्ञाननिष्पत्तिराश्रयो उच्यते।**

**योगो निरोधो वृत्तेस्तु चित्तस्य द्विजसत्तम्।।**[५]इति।

महामुनिपतञ्जलिना उक्तं योगसूत्रे - **तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः**[६]। अर्थात् ध्यानमेव ध्येयज्ञानदन्यज्ञानहीनं प्रत्ययात्मकेन रूपेण ध्येयस्य भाववशाद् भवति तदा तद् ध्यानं समाधिरित्युच्यते। यथा योगवार्तिके - **तदा ध्यानमेव समाधिरुच्यत इत्यर्थः**। समाधिकाले तु ध्यानमेवावशिष्यते। अयमेव अनयोः ध्यानसमाध्योः भेदः। यथा स्पष्टयति वार्तिकारः - **ध्यातृध्येयध्यानकलनावद् ध्यानं तद्रहितं च समाधिरिति ध्यानसमाध्योर्विभागः**। तत्र समाधिवस्थायां ध्यानाभावः न शङ्कनीयः। ध्यानाभावे सति ध्येयस्य द्योतनाभापत्तेः। **अतः** एव सूत्रकारेण समाधिलक्षणसूत्रे इवपदं प्रयुक्तम्। तत्र वाचस्पतिमिश्रेणापि कथितम् - **ननु शून्यं चेत् कथं ध्येयं प्रकाशेतेत्येतद् आह इवेति**।

अत्रेदमवगन्तव्यं यत् समाधेः लक्षणमिदमङ्गसमाधेः न तवङ्गिसमाधेः। विज्ञानभिक्षुः अङ्गाङ्गिनोः पार्थक्यं बोधयति - **अस्य च समाधिरुपस्याङ्गियोगसम्प्रज्ञानयोगादनं भेदो यदत्र चिन्तारुपतया विशेषत ध्येयस्वरुपं न भासते, अङ्गिनि तु सम्प्रज्ञाने साक्षात्कारोदये समाधिविषया अपि विषया भासन्त इति**। तत्र भास्वतोकारोऽपि वदति-पारिभाषि कोऽयं समाधिशब्दो ध्येयविषये चित्तस्थैस्य काष्टवाचकः, अथ च **समाधिरुपमिदं चित्तस्थैर्यं लब्ध्वा गृहीतग्रहर्णग्राह्यविषयकं सम्प्रज्ञानं साधयेत् तस्मिन् सिद्धे सम्प्रज्ञातः समाधि इति**।

दार्शनिकशिरोमणिना श्रीमता शङ्कराचार्येण विवेकचुडामणौ समाधिं वर्णितं यत् समाधिना समस्तनां वासनाग्रन्थीनां विनाशः अखिलकर्मनाशे सति बाह्यान्तरं सर्वत्र सर्वदेव भगवत्स्वरुपजायते नान्यथा यतो हि अन्यासु अवस्थासु मनोवृत्तेश्चाञ्चल्यात् तज्जनमत्यप्रतीतिभिः मिश्रतं भवति।

याज्ञवल्कसंहितायामपि यथा सुत्रद्रेप्रविष्टो जलविन्दुः तेन सहैकयमापद्यते तथैव ध्येयं प्रविष्टं मनः यत् ध्यानाकारेण परिणमते स एव समाधिरित्युच्यते।

**सरित्यतौनिविष्टाम्बु यथाभिन्नलयं त्वियात्।**

**तथाभिन्नं मनस्तत्र समाधिं समवाप्नुयात्।।**[७]इति।

हटयोगप्रदीपिकायामपि- यथा जले क्षिप्तं लवणं स्व स्वरूपं परिहाय जलकानां भवति, तथैवात्मनि स्थित मनः आत्मस्वरूपं परिहाय तेनैक्यमापन्नं भवति स समाधिः प्रोच्यते।

**सलिले सैन्धवं यद्वत् साम्यं भवति योगतः।**

**तथात्ममनसोरैक्यं समाधिरभिधीयते।।**

‘इति। स च समाधि: द्विविध: सम्प्रज्ञानोऽसम्प्रज्ञानश्चतयो: यत्र ध्यत्ध्यानध्येयानां पृथक् पृथक् प्रतिभासो भवति स सम्प्रज्ञातसमाधि:। यथा भाष्यकारेणोक्तं - **यस्त्वग्रे चेतसि सद्भुतमर्थं प्रद्यातभिमुखीकरोति स सम्प्रज्ञातयोग:**। अयं च सम्प्रज्ञातयोग: चतुर्विध: **वितकोविचारानन्दास्मितारुपानुगमात् सम्प्रज्ञात:**। तत्र वितर्कानुगतसम्प्रज्ञातसमाधौ स्थुलालम्वनं भवति। **वितर्क:- चित्तस्थालम्बने स्थूलाभोग:** इति भाष्यकारस्य मतम्। अत्र स्थूलस्वरूपविषये तत्त्ववैशारदीकारवर्तिककारयो: वैमत्यं दृश्यते।

सूक्ष्मविचार:। सूत्रकारेण सूक्ष्मपदार्थेषु अव्यक्तप्रकृतिपर्यन्तनां तत्त्वनां गणना कृता। सूक्ष्मविषयत्वञ्चाऽऽलिङ्गपर्यवसानम्। अत्रापि व्याख्याकारेषु वैमत्यमस्ति। स्थूलभूतानां तत्त्वानां यानि कारणानि विद्यते तानि कारणानि पञ्चतन्मात्राणि। महत्त्वं प्रकृतितत्त्वञ्च सूक्ष्मपदेनव्यपदिष्टम् इति मिश्रा: प्रतिपादयन्ति।

अष्टाङ्गयोगस्य अन्तिमयोग: भवति, समाधियोग: नाम सर्वाषां योगानां सारभुत-प्राणभुताश्चाङ्ग: इत्येश्च नासंशय:। मानवा प्राणायाम-ध्यान-समाधिमार्गमवलम्वं कृत्वा किमपि कार्यं करति चेत् तेषां तस्यां कार्ये अवश्यमेव सफलं भवति इति विचार्य।

## पादटिप्पणी

१. पा.यो.व्या.भा.-३.६

२. पा.यो.द.सू-१/२९(हि)

३. पा.यो.व्या.भा.-१/१

४. श्री. भा. गी – कर्म.यो.श्लो – ५०

५. लि.पु.-८.३

६. पा.यो.सू -३/३

७. या.स.-३.६.६४

८. ह.यो.दी.-४.५

**सहाय्७ाकग्रन्थसूची**

श्रीमद्भगवतद्गीता - मधुसूदनसरस्वती गूढार्थदीपिका, प्रथमसंस्करणम्, वाराणसी - १९६२

सांख्यदर्शन – डॉ. रामशङ्करभट्टाचार्यः, भारतीयविद्याप्रकाशनम्, वाराणसी

सर्वदर्शनसंग्रहः - उमाशङ्करशर्मा, चौखम्भाविद्याभवन, दिल्ली - २०१०

पातञ्जलयोगदर्शनम् महाप्रभुलालगोस्वामी, वाराणसी; चौखम्भासंस्कृतसंस्थानम् १९८३

ईशावास्योपनिषद् (शांकरभाष्यसहित) तृतीयासंस्करण; उत्तरप्रदेश गोरखपुर, गीताप्रेस, १९९८

शोधछात्र:
सांख्ययोगविभाग:
सदाशिवपरिसर:, पुरी

# वेदान्तदर्शने योगाङ्गानां साम्प्रतिककाले उपयोगिता

श्यामसुन्दरसाधुखाँ

अद्वैतवेदान्तेसमाधि:द्विविध:सविकल्पक: निर्विकल्पकश्च इति। तत्र **सविकल्पक:नाम ज्ञातृज्ञानदिविकल्पलयानपेक्षयाद्वितीयवस्तुनि तदाकाराकारिताया: चित्तवृत्ते:अवस्थानम्। तदागजादिभावेनअपिमृद्भावनतद्वैतभानेअपिअद्वैतवस्तुभासते**[१]। परन्तु **निर्विकल्पक: तु ज्ञातृज्ञानादिवि-कल्पलयापेक्षयाद्वितीयवस्तुनि तदाकाराकारिताया: चित्तवृत्ते:अतितरामेकीभावने अवस्थानम्। तदा तु जलाकाराारितलवणानवभासेन जलमात्रावभासवद्वितीयवस्त्वाकाराकारितचित्तवृत्ति-अनवभासेन अद्वितीयवस्तुमात्रम् अवभासते।**[२]

वस्तुत: निर्विकल्पकसमाधे: अष्टाङ्गानि सन्ति। यथा यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधय:। परन्तु योगदर्शने योग एव समाधि:। योगस्तु चित्तवृत्तिनिरोध:। अत्रचित्रवृत्तिनिरोध:तथासमाधि: द्विविध:, सम्प्रज्ञातसमाधि: असम्प्रज्ञातसमाधिश्च। अत्रसम्प्रज्ञातं साध्यम्, असम्प्रज्ञातं च साधनम्, महर्षिणापतञ्जलिनापि अष्टाङ्गयोगानां उल्लेखकृतानि। किन्तुवेदान्तेवर्णितानि येगाङ्गानां सर्वांशेसमानकृतनैव दृश्यन्ते। साम्प्रतिककाले योगाङ्गानां प्रयोजनानि नैव अस्वीक्रियन्ते। तेषांमहत्त्वंनिम्नेवर्णिता:।

**यम: –**

आचार्यसदानन्दयोगीन्द्र: वेदान्तसारग्रन्थे यदुक्तम्- **अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमा:। तत्रअहिंसासर्वथासर्वदा च सर्वभूतानामविद्रोह:।**[३]साम्प्रतिककाले अस्मिन् विश्वे प्राय: सर्वदेशै: युद्धं विहाय शान्तिंकामते, किन्तु यदि शतवर्षे पूर्वेएतद् चिन्तयति चेत् प्रथम-द्वितीयौ विश्वयुद्धं नैवभवति। किन्तुसम्प्रतिपशुसंरक्षणमपि अहिंसाया: प्रमाणस्वरूप:। सर्वदा सत्यकथनं, कदापि मिथ्या नकथनमेव सत्यम्। तदर्थं भारतीयदर्शने उक्त: **सत्यं शिवंसुन्दरम्।**अर्थात्सर्वदा सत्यादर्शी अस्माकंसंस्कृते: सत्यस्य पूर्वैव अनूभूयते।

परन्तुइदानिं सत्यपरीक्षणाय यन्त्रं निर्मितम्। अत्र यन्त्रे सत्यकथनपरिक्षणार्थं उपयोगी भवति। वस्तुत:वेदा सत्यानुसन्धानस्योपि सर्वापेक्षागुरुत्वंददाति। स्तेयम् अशास्त्रपूर्वकं द्रव्याणां परत:स्वीकरणम् तत्प्रतिषेध:**पुनस्पृहारूपम्** अस्तेयम्। आधुनिककाले न्यायपालिकाद्वारा चौर्यवृत्तिनिरोध:विभिन्ना: नियम परिकल्पिता:। एवञ्चशास्तिअपि विधेया:। अत:सम्प्रतिकालेएतद्अवश्यमपालनीयम्। ब्रह्मचर्यसम्बन्धे दक्षसंहितायामस्ति यत्-

**कर्मणामनसावाचासर्वावस्थासुसर्वदा।**

**सर्वत्र मैथुनत्यागी ब्रह्मचर्यं प्रचक्षते।।**[४]

अत:वक्तुं शक्यतेयत गुप्तेन्द्रियस्योपस्थस्य संयम। सम्प्रीतनारिधर्षणंभारतवर्षस्य वृहतसमस्या यद्यपि ब्रह्मचर्यपालनेन एतद्समस्या निरोधकर्तुं शक्यते। अपरिग्रह:नामविषयाणाम् **अर्जन-रक्षण-क्षय-संयोग-हिंसादोषदर्शनाद्अस्वीकरणम्**। वस्तुत: उपर्युक्त यमाङ्गानां पालनै: अस्माकंदेशे तथा अस्मिन् विश्वे जङ्गीसमस्या आतंकवादीकता, सीमाविरोधसमस्या, नारिधर्षण: इत्यादिनां समाधानंभविष्यति।

**नियम: —**

वेदान्तसारग्रन्थे यदुक्तं **शौचसन्तोषतप:सध्यायेश्वरप्रणिधानानि नियमा:**। तत्रशौचंमृज्जलादिजनित मध्येभ्यवहरणादि च वाह्यम्। आभ्यन्तरं चित्तमलानामाक्षालनम्। अधुनाभारतवर्षस्य **प्रधानमन्त्रीस्वच्छभारत**इतिप्रकल्पेन शौचताया: गुरुत्वंसर्वै:स्वीकृतम्। प्रचीनकालादेव भारतीयसंस्कृते:मूलमस्ति अभ्यन्तरवाह्ययो: शुचिता। गान्धिमहाभागस्य दार्शनिकभावानाया: फलस्वरूप:अद्यतनकालेस्वच्छभारतप्रकल्प साफल्यमर्जयति। सन्तोष-प्रतिष्ठायाम् अनुत्तम:सुखलाभ:भवति। वस्तुत:सन्तोष:नाम सन्निहितसाधनादधिकस्यानुपादित्सा। अस्माकंपुर्वपुरुषाकदापिवर्हिर्देशान्आक्रमणम्क-दापिनकृतवान्। तद् अस्माकंसन्तुष्टि:पूर्वप्रमाणित:।

यदि अस्माकंसन्तुष्टिस्वल्पेनैवभवति,तर्हिविमुद्रिकरणेमनुष्यानां मृत्यु: भविष्यति एव। तप:द्वद्वन्दसहनम् द्वन्द्वश्च जिघात्सापिपासते, शीतोष्णे, स्थानासनेकाष्ठमौनाकारमौने च। प्रकृतपक्षेतपंविनाअस्माकंजीवन साफल्यंकदापिनमिलिष्यति। अध्ययनं तथातपंविनावर्तमानसमाजेकदापिप्रतिष्ठितनैवभवितुं शक्यते। स्वाध्याय

वेदादि-ब्रह्मविषयक:शास्त्राणां अध्ययनं प्रणवजपोवा। स्वाध्यायानन्तरं परब्रह्मण:श्रद्धापूर्वकचिन्तनम्एवञ्च तस्य महिमादिवर्णनम्तथाईश्वराराधनाईश्वरप्रणिधानम्। वेदान्तदर्शनस्य मूलप्रयोजनं समाधिलाभ:अपिअनेनईश्वरप्रणिधानेनएवसिद्धति-समाधिसिद्धिश्वरप्रणिधानात्।

**आसनम्-**

अद्वैतवेदान्तमते- करचरणादिसंस्थानविशेषलक्षणानिपद्मस्वस्तिकादीनिआसनानि। प्रकृतपक्षेशरीर: सुस्थभवति चेत मन:अपिसुस्थभवतिएवञ्च सकलाचार्ये सिद्धि अपिभवति। आयुर्वेदे यदुक्तम् **शरीरं व्यधि मन्दिनम्"** ।आसनानिकरणै:सर्वेसुस्वास्थंप्रात्पुम् शक्यते। आसनानि यथा —पद्मासनंवीरासनंसिद्धासनंभद्रासनंस्व-स्तिकासनंदण्डासनञ्च। अधुना विद्यालये विभिन्नानिआसनानि आवश्यकरूरणेप्रचलितानि। विश्वविद्यालस्तरेअपि योग: इतिविषयमधीकृत्य आचार्य, विद्यावरिधि इत्यादय: डिग्रिप्राप्तुं शक्यते। इदानींरामदेववावा योगासनस्योपरि बिश्वख्याति अर्जितवान्। तेषांरचित:पुस्तकानिपठित्वाएवञ्च विभिन्नयोगशालायां गत्वाअधिकांशदेशवासिन:उपकृतंभवति।

**प्राणायाम: -**

सदानन्दयोगीन्द्रेण वेदान्तसारे प्राणायाम: विषये उक्तंरेचक-पूरक-कुम्भक-लक्षणा: प्राणनिग्रोपाया: प्राणायामा:। प्राणवायुं शनै:शनै:नास्तिकारन्ध्रात्वहि:नि:शरणंरेचक:। तद्रूपपुन:शनै तस्य ग्रहणंपुरक: ध्यैर्यपूर्वक: तस्य स्थितिकरणंकुम्भक:। अत:उपरिवर्णित: तिस्त्रक्रिया: आसनकरणावसरेपालनं प्राणायाम्। एतस्य महत्वम् अधसर्वै: अङ्गीकृतम्। प्रमाणस्वरूप:अहंवक्तुं शक्यते पतञ्जीयोगशाला सम्पूर्णविश्वेस्थापिता। तेषांकृत: प्राणायाम:दूरदर्शनेपुस्तकेसर्वत्रापिउदाहरणरूपेआधुनिककाले जनप्रियता लभते।

**प्रत्याहार:-**

प्रत्याहार: इति विषये वेदान्तसारकार: उक्तवान् इन्द्रियाणां स्व-स्वविषयेभ्य: प्रत्याहरणम्। प्रत्याहार: प्रकृतपक्षे इन्द्रियजयी भवति। स्वयं इन्द्रियजयी पुरुष:सर्वदासम्पदशालीभवति। तद्विषये कौटिल्यीयार्थशास्त्रे यदुक्तम्- **शत्रुषड्वर्गमुत्सृज्यजामदग्न: जितेन्द्रिय:।**

**अम्बीरषश्च नाभागोबुभुजातेचिरंमहीम्।।**

आधुनिककाले विवेकानन्द-नेताजी-गान्धी इत्यादिनां द्रष्टव्यरूपेण वदितुं शक्यते। एतेसर्वे इन्द्रिजयेन जगतिपठिष्ठितवन्त:।

**धारणा-**

**अद्वितीयवस्तुनि-अन्तरिन्द्रियधारणं धारणा।** अर्थात्नाभिचक्रे, हृदयपुण्डरिके, मूर्ध्नि, ज्योतिषि, नासिकाग्रेजिह्वाग्रे इत्यादिषुदेशेषुवाह्योविषये वा चित्तस्य वृत्तिमात्रेणवन्धइतिधारणा। वस्तुत:वेदान्तमतेतदतिरिक्तअन्त:करणस्वरूप मनवद्धादय: अद्वितीयवस्तुरूपब्रह्म प्रतिस्थापनंधारणा इत्युच्यते। आधुनिककाले एतस्यापि गुरुत्वअधिकंवर्तते।

**ध्यानम्-**

**वेदान्ते यदस्ति अद्वितीयवस्तुनि विच्छिद्यविच्छिद्यान्तरिन्द्रियवृत्तिप्रवाहो ध्यानम्।** स्वामिविवेकानन्देनोक्तं ध्यनेन मन: संयोग: बर्धतिएवंविषयं प्रतिएकाग्रतागच्छति। वस्तुत:इतस्तत:विचरणशीलचित्तंतथा मनवुद्धादय इत्यादिनां परब्रह्मस्वरुप:ब्रह्मप्रतिस्थापनंतथावारंवारंप्रवृत्तिकरणम् ध्यानम्। स्वामिविवेकानन्द:अपिसर्वेषां इष्टदेवतांप्रतिमननिवेशकरणं ध्यानम् इतिवदन्ति।आधुनिककालेविद्यार्थिणांएतद् आवश्यकम्।

**समाधि:-**

समाधिस्तुत: सविकल्पएवसमाधिविषये आदौ उक्त: यद्यपि समाधिविषये जैनबौद्धयोगादय दर्शने अधिकाधिकंवर्णनम् अस्ति। वेदान्ते अपि तद्वत्। आधुनिककाले विज्ञानमययुगे एतस्य गुरुत्वम् अधिकं नास्ति एव।

**उरसंहार:–**

सम्प्रति योगाङ्गानां गुरुत्वम् उत्तरोत्तरदिवसेवर्धमाना:सन्ति। योगाङ्गेषु आसनम् प्राणायानां अभ्यास: विद्यालये विश्वविद्यालये महाविद्यालये च प्रयोग: दृश्यते। योगशाला इदानिं सर्वत्र निर्माणं क्रियते। योगादिवस पालनेन एतस्य महत्त्वम्अधिकाधिकवर्तते। पाश्चात्यदेशे योगस्य महति चर्चा वर्तते। स्वास्थ्य मन: शरीरञ्च सम्यक रूपेण चालनाय योग: नित्यकर्मो भवति। विज्ञानद्वरा प्रमाणित: प्राणायामासनादे: गुरुत्वम्। तदर्थ योगाङ्गानां अभ्यास: अवश्यकर्तव्य।

## पादटिप्पणी

१. वेदान्तसार:-३०

२. वेदान्तसार:-३०

३.वेदान्तसार:-३१

४.दक्षसंहिता

## सन्दर्भ ग्रन्थसूची

१.बृहदारण्यकोपनिषद् -सानुवादशाङ्करभाष्यम्, गीताप्रेस, गोरक्षपुरम्-१९९८

२.तैत्तिरीयोपनिषद् -सानुवादशाङ्करभाष्यम्, गीताप्रेस, गोरक्षपुरम्-२०१०

३.वेदान्तपरिभाषा - धर्मराजाध्वरिन्द्र:,चौखम्वाविद्याभवन,वाराणसी-१००५

४.वेदान्तसार: - सदानन्दयोगिन्द्र:,चौखम्वा सुरभारतीप्रकाशन, वाराणसी-१००९

शोधच्छात्र:
अद्वैतवेदान्तविभाग:
श्रीसदाशिवपरिसर:,पुरी

# सांख्ये जगत्कारणविमर्शः

सीताकान्त मिश्र

जगतः सत्ताविषये, सृष्टिविषये, मूलकारणविषये वा दार्शनिकेषु पर्याप्तरूपेण मतभेदो संदृश्यन्ते मुलकारणेन सह केन रूपेण अस्य जगतः सम्बोन्धऽस्ति विषये भारतीयदार्शनिकाः मतैक्यं न परिपोषयन्ति अतः जगतः भिन्नभिन्नमतान्युपलभ्यन्ते भारतीयदर्शने।

जगतः मूलकारणं नित्यपरमाणुरिति न्यायवैशोष्कनामाभिमतम्। तेषां मतेन द्वाभ्यां परमाणुभ्य द्वयाणुकस्योत्पत्तिः, द्वयणुकत्रयेण च त्रसरेणुरुत्पद्यते। अतः नित्यपरमाणुसकाशात् अनित्यकार्याणाम् उत्पद्यते अतः न्यायवैशेषिकदर्शनाात्मतः सृष्टिवादः आरम्भवादः नाम्ना प्रसिद्धिः।

सृष्टिविषये बौद्धमतं संघातवादःनाम्ना ख्यातम्। क्षित्याद्युपादानकारणानां समुहमात्रेण सृष्टिः कार्योत्पत्ति जायते इति । अतः बौद्धाः संघातवादिनाम्ना भवन्ति।

अद्वैतवेदान्तिनां मते नित्यशुद्धबुद्धमुक्तस्वभावविशिष्टं ब्रह्मः। एवं भूतस्य ब्रह्मण अवास्तविकच्छायारूपमिदं जगत्। अतः शुद्धब्रह्मणः विवर्तरूपमिदं जगदिति हेतोः अद्वैतवेदान्तिनः विवर्तवादिन इत्युच्यते।

संसारिकप्रपञ्चोऽयं व्यक्तिविशेषस्य अविद्यावशात् तात्कालिकः तद्रुपात्मकश्चेति ब्रूवाण वेदान्तैकदेशिनः दृष्टिसृर्षटवादिन इत्युच्यन्ते।

प्रत्यभिज्ञानदर्शनस्याचार्येण अभिनवदुप्तेन स्वसम्प्रदाये सृष्टिविचारः प्रतिबिम्ववादः नाम्ना प्रत्यपादि तन्मते ब्रह्मः जगतः कर्ता अपि तु यथा स्वच्छदर्पणे वहिःस्थर्पार्थानां प्रतिबिम्वः निपातति तथा ब्रह्मणि अन्तर्भूतस्य जगतः प्रतिबिम्बः दृश्यते।

सांख्ययोगमते तु जगदिदं प्रकृत्याः यथार्थपरिणामः कार्य वा। अतः सृष्टिविषये सांख्ययोगाचार्याः परिणामवादिनः भवन्तीत्युच्यते। परिणामवादः सांख्ययोगदर्शनस्य मुख्यसिद्धान्तेषु एकतमः।

सृष्टेः मुलकारणं किम् ? इति जिज्ञासा दूरीकरणार्थम् ईश्वरकृष्णेन सरलोपायेन उक्तं- प्रकृत्तिपुरुषयोः संयोग एवात्र सृष्टिरूपभिव्यक्त्यर्थं कारणम् । यथा- **पङ्गुवन्धयोः**[१] पारस्परिकसहयोगेन लक्ष्यप्राप्तिः , तथा क्रियानिमितं प्रधानेन सह चैतन्ययुक्तपुरुषस्य संयोगेन भोग-मोक्षरूपप्रयोजन सिद्धः। प्रकृत्तिपुरुषयोः एवम्भूतः संयोगः एव सृष्टार्थं कारणम्।

**सृष्टेः मुलकारणम्**

चेतनाचेतनरूपेण मुख्यतः तत्त्वद्वयमङ्गीकुर्वन्ति सांख्याः। तत्र यत् चेतनतत्त्वं पुरुषः यः खलु साक्षी, नित्यमुक्ताः, मध्यस्थः, द्रष्टा, अकर्ता च। परन्तु अचेतनतत्त्वं प्रकृतिः, प्रधानम्, अव्यक्तं, वेति नाम्ना भवत्यभिहितम्। प्रकृष्ट कृतिः अस्या अस्तीति प्रकृतिः । प्र उपसर्गपूर्वकात् **कृ** धातोः **क्तिन्** प्रत्यये प्रकृतिपदं निष्पद्यते। अस्यार्थः प्रकर्षेण करोति , उत्पादयति इत्यर्थः । यद्यपि प्रकृतिशब्दस्य विश्लेषणं शास्त्रेषु दृग्गोचरीभूतं भवति तथापि देवीभागवते अत्यन्तपरिस्फुटितं भवति। तद्यथा –

**प्रकृष्ट वाचकः प्रश्च कृतिश्च सृष्टिवाचकः ।**<br>
**सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्तिता।।**<br>
**गुणे प्रकृष्टसत्वे च प्र शब्दो वर्तते श्रुतौ ।**<br>
**मध्यमे रजसि कृश्च तिः शब्दस्तमसि स्मृतः।।**<br>
**त्रिगुणात्मिकास्वरूपा या सर्वशक्तिसमन्विता।**<br>
**प्रधानं सृष्टिकरणे प्रकृतिस्तेन कथ्यते।।**<br>
**प्रथमे वर्तते प्रश्चकृति श्च सृष्टिवाचकः।**<br>
**सृष्टेराद्या च या देवी प्रकृतिः सा प्रकीर्तिताः ।।**[२]

**प्र करोति इति प्रकृतिः** इति व्युत्पत्यानुसारं प्रकृति पदं सर्गावस्थां द्योतयति। प्रकर्षेण धीयते स्थाप्यते अत्राखिलमिति प्रधानम् इति व्युत्पतिस्तु प्रलयावस्थां बोधयति। तथा अव्यक्तं पदमप्यमुमेवार्थं प्रकाशयति। प्रकृतिः महदादितत्त्वानां मूलकारणम्। महदादयः त्रिगुणात्मकाः, अतः प्रकृतिरपि त्रिगुणात्मिका इत्यनुमियते, कार्येषु कारणगुणानां विद्यमानसम्भवात् , कृष्णतन्तुनिर्मितकृष्णपटवदिति।

महदादिनित्रयोविंशतितत्त्वानि प्रकृतिसकाशात् उत्पनानि भवन्ति, तत्रैव परिशेषे लीयन्ते च। विश्वात्मिका सत्वादिगुणाः स्वस्वस्थुलसूक्ष्मभावं परित्यज्य यदा स्वस्वव्यापारात् निवृत्ताः सन्ति अत्यन्तरूपेणविभागं प्राप्य सुक्ष्मशक्तिरूपेणवस्थिताः भवन्ति सा अवस्था प्रलयावस्था इत्युच्यते। तथा चैतेगुणाः यदा स्वाधिकारसामर्थ्येः परिणासोन्मुखाः सन्तः विस्तारं प्राप्य महदादिसन्निवेषरुपेणाभिव्यक्ताः भवन्ति तदा सैवावस्था सर्गावस्था इत्युच्यते।

**प्रकृतिस्वरूपम्**

**सत्वरजस्तमसां साम्यावस्थां प्रकृतिः**[३] इति सूत्रेण ज्ञायते यत् भगवता कपिलेन प्रकृतित्वे साम्यावस्थाङ्गताः सत्वरजस्तमः स्वरूपात्माकास्त्रयोऽपि गुणाः स्वीकृताः सन्ति। सैवाऽवस्था गुणानां साम्यावस्था कथ्यते यस्याः सर्वेऽपि सर्गोन्मुखताविरहिताः भवन्ति। अवस्थैषा च सर्वेष्यापि जगतः प्रलीनावस्थैव भवति यत्र निरवधिकं सर्वतो भवति। यद्यपि मूलोपागानकारणन्तु सर्वेष्वपि कालेषु भूत-वर्तमान-भविष्येषु तिष्ठत्येव परन्तु सर्गकाले कार्यरूपेण दृश्यमानं भवति, प्रलयकाले च कारणरूपेणाऽव्यक्तस्वरूपकं भवति। सर्गावस्थायां गुणेषु वैषम्यमुपजायते, यज्जगतान्नैकविधत्वस्य भवति बीजम्। सृष्टौ सत्वरजस्तमसां परस्परन्युनाधिक्ये जगद्वैचित्रस्य बीजे स्तः। कस्मिचित् वस्तुनि सत्वास्याध्यक्यं भवति रजस्तमोश्च भवति न्युनता। तथैव कस्मिंश्चित् पदार्थे रजसो भवत्याधक्यं, भवति च न्युनता सत्वतमसोः, इत्थमेव कस्मिश्चद् भवति तमसः प्राधान्यं सत्वरजसो भवति न्युनता।

**अन्योन्याभिभावाश्रयजननमिथुनवृत्तयश्च गुणाः**[४] इति कारिकाकारः। अन्यैनेव प्रकारेण किञ्चित् किञ्चियत्यासेन गुणानां स्थितिरेव सर्गे नैकविधतां भजते। वस्तुतस्तु सर्वमपि स्वरूपजातान्त्रिगणमयं त्रिगुणात्मिका प्रकृतिमयञ्चास्ति।

**स्त्रीस्वभावा प्रकृतिः**

सांख्यदर्शने प्रकृतिः स्त्रीस्वरूपा इति कथयितुं शक्यते । यतो हि प्रकृति प्रसवधर्मी । तस्मादैहिकसृष्टिः परिणामरूपेण उपजायते । परस्परविरुद्धस्वभावजोऽपि द्वयोः (प्रकृति-पुरुषयोः) कश्चिददृष्टेच्छया पङ्ग्वन्ध्व संयोगापेक्षते सृष्ट्यर्थम् । यथा मानवसृष्टेः स्त्रीपुंसः संयोग एव कारणम् । तथा जागतिकपदार्थसृष्टेः प्रकृतिपुरुषसंयोगकारणम् । प्रकृति-पुरुषयोः सम्बन्धः स्त्री-पुरुषदाम्पत्यसम्बद्धरिति महाभारते प्रतिपादितोऽस्ति

परिणासोन्मुखाः सन्तः विस्तारं प्राप्य महदादिसन्निवेषरुपेणाभिव्यक्ताः भवन्ति तदा सैवावस्था सर्गावस्
इत्युच्यते।

<u>**प्रकृतिस्वरूपम्**</u>

**सत्वरजस्तमसां साम्यावस्थां प्रकृतिः**[3] इति सूत्रेण ज्ञायते यत् भगवता कपिलेन प्रकृतित
साम्यावस्थाङ्गताः सत्वरजस्तमः स्वरूपात्माकास्त्रयोऽपि गुणाः स्वीकृताः सन्ति। सैवाऽवस्था गुणानां साम्याव
कथ्यते यस्याः सर्वेऽपि सर्गोन्मुखताविरहिताः भवन्ति। अवस्थैषा च सर्वेष्यापि जगतः प्रलीनावस्थैव भव
यत्र निरवधिकं सर्वतो भवति। यद्यपि मूलोपागानकारणन्तु सर्वेष्वपि कालेषु भूत-वर्तमान-भविष्येषु तिष्ठत्
परन्तु सर्गकाले कार्यरूपेण दृश्यमानं भवति, प्रलयकाले च कारणरूपेणाऽव्यक्तस्वरूपकं भवति। सर्गावस्थ
गुणेषु वैषम्यमुपजायते, यज्जगतान्नैकविधत्वस्य भवति बीजम्। सृष्टौ सत्वरजस्तमसां परस्परन्युनाधि
जगद्वैचित्रस्य बीजे स्तः। कस्मिचित् वस्तुनि सत्वास्याध्यक्यं भवति रजस्तमोश्च भवति न्युनता। तथैव कस्मिश्चि
पदार्थे रजसो भवत्याधक्यं, भवति च न्युनता सत्वतमसोः, इत्थमेव कस्मिश्चद् भवति तमसः प्राध
सत्वरजसो भवति न्युनता।

**अन्योन्याभिभावाश्रयजननमिथुनवृत्तयश्च गुणाः**[4] इति कारिकाकारः। अन्यैनेव प्रकारेण किञ्चित् किञ्चिव्यत्या
गुणानां स्थितिरेव सर्गो नैकविधतां भजते। वस्तुतस्तु सर्वमपि स्वरूपजातान्त्रिगुणात्मकं त्रिगुणात्मिका प्रकृतिमयश्चि

तद्यथा –

क्षरक्षरयोरेष द्वयो: सम्बन्ध इष्यते ।
स्त्रीपुंसोर्वापि भगवन् सम्बन्धस्तद्वदुच्यते ।।
ऋते तु पुरुषं नेह स्त्री गर्भं धारयत्युत ।
ऋते स्त्रियं न पुरुषो निवर्त्तयेत्तथा ।।
अन्योन्यस्याभिसम्बन्धादन्योन्यगुणसंश्रयात् ।
रूपं विवर्त्तयत्येतदेवं सर्वासु योनिषु ।।
रत्यर्थमभिसम्बन्धादनन्योगुणसंश्रयात् ।
ऋतौ निवर्त्येते रूपं तद्वक्ष्यामि निदर्शनम् ।।[५]

जगत् त्रिगुणमयेव भवति, तथा सर्वाण्यपि च सांसारिकानि वस्तुन्यपि गुणानां प्रीत्यप्रीतिविषादाभिव्यञ्जकानि मूलोपादानकानि सन्ति । सांख्यसिद्धान्तमनुश्रुत्य प्रकृतिरेव जगतां मूलोपादानकारणमस्ति। निखिलमपि जगदेतत् प्रकृते: कार्यमस्ति। परन्तु प्रकृतिरेषा नास्ति कस्याचिदपि कारणभूतस्य पदार्थस्य कारणभूता। इतिकृत्त्वैव प्रोच्यते **मूलप्रकृतिरविकृतिरिति**[६], **मूलेमूलाभावादमुलम्मूलमिति**[७] च सांख्यकारिकाकपिलसूत्राभ्याञ्च प्रकृते: सर्वथा मूलोपादानकारणत्वम्।

सांख्ययोगविभाग: शोधच्छात्र:
सदाशिवपरिसर:, पुरी
राष्ट्रियसंस्कृतसंस्थानम्, नव देहली

## सहायकग्रन्थसूची

१. सां. का. २१
२. दे. भा.
३. सां.सू १/६१
४. सा.का १२
५. महाभारत
६. सां.का. ३
७. सां.सू १/६७

(Footnotes)

# वेदान्तदिशा जगत्कारणम्

सस्मिता महापात्र

दृश्यते सक्षातक्रियते परमात्मदिसंज्ञासज्ञित: परमपुरुष: येन तद् दर्शनम्। अर्थात् येन आत्मा ज्ञायते विचार्यते सदासदात्मकविचारो वा क्रियते तदेव दर्शनमिति। वस्तूनां तत्त्विकं स्वरूपज्ञानं भवति दर्शनम्। भारतीयदर्शनस्य महत्त्वं वैशिष्टं च सर्वत्र उपलभ्यते। दर्शनस्य आस्तिकनास्तिकत्वेन भेदद्वयमस्ति। भारतीयदर्शनपरम्परायाम् आस्तिकदर्शनेषु महर्षिकपिलप्रणितं सांख्यदर्शनं प्राचीनदर्शनरूपेण ज्ञायते।

सांख्ये वस्तुत: प्रकृतिपुरुषौ इति तत्त्वद्वयस्यैव विवेचनं वर्तते। जगत: मुलकारणरूपे प्रकृति भवति। प्र करोति इति प्रकृति: । प्रकृतिपदस्यार्थ: क्रियते सर्वं जगदनया इति प्रकृति: । अर्थात् येन कारणेन समस्तमिदं सृजते सा प्रकृति: । प्रधानपदस्यार्थ: प्रकर्षेण धीयते अन्तर्लीयते सर्वं जगत् यस्मिन् तत्। अर्थात् समस्तजगत: यस्मिन् लय: भवति तत्प्रधानमिति । सत्त्वरजस्तममयी त्रिगुणात्मिका इयं प्रकृति: । प्रसंङ्गेऽस्मिन् सांख्यतत्त्वकौमुद्यां कारिकाकारईश्वरकृष्णेन उक्तम्- अजामेकां लोहितशुक्लकृष्णां वह्वि: प्रजा: सृजमानां नमाम:[१] इति। समस्तकार्याणां इयं कारणस्वरूपा प्रकृति:। एषा प्रकृति: इन्द्रियागोचरा । तस्मात् अव्यक्त इत्यानेनापि नाम्ना अभिधीयते।

## प्रकृत्तिसिद्धि:

प्रकृते: सूक्ष्महेतो: न तावदीयम् इन्द्रियै: प्रत्यक्षीक्रियते । प्रधानं सौक्ष्मान्नोपलभ्यते यथाऽकाशेधूमोष्णोजलनीहारपरमाणव: सन्तोऽपि नोपलभ्यते [२] इति । तस्मात् इन्द्रियगोचरात्त्वात् अनुमानप्रमाणेनैव अस्या: सिद्धि: अनुमेया ज्ञात्यव्या इति। तथा च – कार्यात् कारणानुमानं तत्साहित्यात् । यथा कार्यात् कारणमनुमीयते तथैव प्रकृतिरपि अनुमेया।

अनैरपि सूत्रै: मुलप्रकृत्तिरेव जगत: कारणरूपा इति प्रतिपाद्यते। तानि च सूत्राणि भवन्ति – अव्यक्तं त्रिगुणाल्लिङ्गात्, परिणामात् , समन्वयात् , शक्तितश्चेति।

तस्मात् महदादिव्यक्तरूपकारैरेव प्रकृत्तिरनुमया । कार्यदर्शनात्तदुपलब्धे:[४] इति। अत: प्रधानस्य सिद्धि: कार्यैरेव भवितुमर्हति।

भेदानां परिणामात् समन्वयात् शक्तित: प्रकृतिश्चेति।

कारणकार्यविभागादविभागद्वैश्वरूप्यस्य।।[५]

कारिकायामस्यां पञ्चभि: हेतुभि: महदादिकार्यै: तेषां महदादिकार्याणां कारणमव्यक्तं प्रधानमनुमीयते।

**प्रधानकारणवादस्य खण्डनम्**

वेदान्तवाक्यप्रमाण्यवादिभिरद्वैतवेदान्ताचारै: चेतनम् । एकमेवद्वितियं ब्रह्मैव जगत्कारणमिति अभ्युपगण्यते। अथातो ब्रह्मजिज्ञासा[६] इत्यारभ्य तत्तु समन्वयात्[७] इति चतुर्भि: सूत्रै: ब्रह्मैवज्जगत्कारणत्वेन संसाधयतिं वेदान्तवाक्यानां चेतनकारणवादिभि: चेतनब्रह्मणि समन्वय: दर्शित:।

वेदान्तमते चेतनकारणवाद:। अत: तत्प्रतिपक्षिवादिन: दार्शनिका: ये अचेतनमेव जगत् कारणम् इत्यभ्युपदच्छन्ति ते सर्वेऽपि उत्तिष्ठन्ति। आक्षेपार्थं यतन्तेऽत्यभिप्रायवचनम् । तेषु प्रबलेषु अचेतनवादिषु प्रधानकारणवादिन: सांख्या: परमाणुकारणवादिन: , न्यैयैयिका: , वैशेषिकाश्च प्रमुखतया भवन्ति। तत्रापि सांख्या: विशिष्टा: महत्वपुर्णा: च। तर्हि सांख्ययोगस्मृतीनामेव कुत: खण्डनमिति पृष्टे आचार्या: निगदन्ति यत् सांख्यं योगं च मोक्षसाधनत्वेन लोकप्रसिद्धं – तत्कारणं सांख्ययोगाभिपन्नं ज्ञात्वा देवं मुच्यते सर्वपार्शै: [८] इति श्रुते:। अत: सांख्ययोगस्मृतिग्रन्थनिराकरणपूर्वकोऽयं यत्न: कृत:। तदुक्तं भाष्ये – सतीष्वपि आध्यात्मविषयेसु बह्वीषु स्मृतिषु सांख्ययोगस्मृत्येरेव निराकरणे यत्न: कृत: । सांख्ययोगौ हि परमपुरुषार्थसाधनत्वेन लोके प्रख्यातौ , शिष्टैश्च परिगृहितौ , लिङ्गेन च श्रौकेन उपबृम्हितौ – तत्कारणं सांख्ययोगाभिपन्नं ज्ञात्वा देवं मुच्यते सर्वपार्शै:[९] इति।

महर्षि: बादारायणोऽपि सांख्यप्रभावमेव विज्ञाय वेदान्तवाक्यानां ब्रह्मण्येव तात्पर्येण समन्वयो भवतीति विज्ञाप्य ईक्षतेर्नाशब्दम् [१०] इत्यादि सूत्रै: प्रधानकारणवादं खण्डनम् अधोभागे दर्शयिष्यते ।

सांख्यमतम्- प्रधानं जगत्कारणं ,सर्वशक्तिमत् सत्वगुणाध्क्यात्।

वेदान्ते खण्डनम् - यदि सत्वगुणस्य प्राबल्येन सर्वज्ञं तर्हि रजोगुणोतमगुणो प्राबल्ये सति अल्पज्ञमपि भवेत्। तथापि प्रधानावस्थायां गुणत्रयसाम्यस्थैव जगत्कारणत्वं न सत्वधर्मः।

सांख्यमतम्- मृत्तिकादिवदनेकस्वरूपत्वात् प्रधानसैव जगत्कारणं न तु ब्रह्मणः।

वेदान्ते खण्डनम्- एतत् समाधानं मतम् आचार्यैः कथ्यते- ईक्षणक्रियाकारणसमर्थम् इत्युक्तम्।ईक्षणक्रिया कुर्वद्भिः स्व चेतनेव सम्भवति न तु अचेतनम्। अतः अचेतनः जगत्कारणस्य भवितुं न शक्नोति।

एवं प्रकारेण सांख्यजगत्कारणस्य वेदान्ते खण्डनं भवति।

शोधच्छात्र
सांख्ययोगविभागः
सदाशिवपरिसरः, पुरी
राष्ट्रियसंस्कृतसंस्थानम्, नव देहली

## सहायकग्रन्थसूची

1. सां.त. कौ- मङ्गलाचरणम्
2. गौ.भा.का-८
3. सांख्यसूत्र- १.१३५
4. सां.सू- १.११०
5. सां.का-१५
6. ब्र.सू- १.१.१
7. ब्र.सू- १.१.४
8. श्वे.उ-३.६.१.१३
9. ब्र.सू.शा.भा- २.१.३
10. ब्र.सू.१.१.५

# वेदान्तदर्शने शिक्षा

श्रीमन्तकुमारपण्डा

''भारतीयदर्शनम्'' आस्तिक-नास्तिकेति भेदेन द्विविधम्। ''नास्तिको वेदनिन्दकः'' इति नास्तिकशब्दस्य व्युत्पत्या यानि दर्शनानि वेदनिर्द्दिष्टपथा स्वीयमतानि प्रतिपादयन्ति, तानि ''आस्तिकदर्शनानि'' तद् विपरितानि तु ''नास्तिकदर्शनानि''। सांख्ययोग-पूर्व मीमांसोत्तरमीमांसा-न्याय-वैशेषिकभिदा 'आस्तिकदर्शनं' षड्विधम्। चार्वाक-बौद्ध-जैन भेदान्नास्तिकदर्शनं त्रिविधम्। एषु बौद्धदर्शनं, सौत्रान्तिक-वैभाषिक-माध्यमिक-योगाचार भेदाच्चतुर्विधम्। तेन आस्तिकदर्शने उत्तरमीमांसा वेदान्तसंज्ञा लभते। वेदान्त इति नाम्न एव 'वेदस्योऽन्तिमो भागो' बुध्यते। उपनिषत्सु वेदस्यान्तिमो भागः। तेन वेदान्तशब्देन उपनिषदः एव ग्राह्याः। वेदान्तो नाम उपनिषद् प्रमाणं तदुपकारिणि शारीरकसूत्रादीनि च।

आचार्यशङ्करः उपनिषदः ब्रह्मवादसिद्धान्तं प्रतिपादितवान् । तमनुसृत्य प्रकृतिः जीवादयः ब्रह्मणः भिन्नाः न सन्ति । ब्रह्मैव विविधरूपेण भासमानमस्ति। अज्ञानबन्धने जीवो भवति । तन्मुक्तिः ज्ञानेनैव सम्भवति । कर्मोपासनाभ्यां मुक्तिः असम्भवाऽस्ति। अत्र दर्शने केन्द्रियविषयत्वेन सम्पूर्णसृष्टिः माया विद्यते, तद्रचयिता ब्रह्म एव अन्तिमनिरपेक्षसत्यमस्ति। शङ्करदर्शने मुख्यरूपेण ब्रह्म एव विद्यते यत् शुद्धविचाराणां पूर्णतायाः परमानन्दस्य परमसत्तायाश्च स्वप्रकाशितम् एकात्म्यमस्ति ।

**वेदान्तदर्शने शिक्षा (Education in Vedanta Philosophy)** वेदान्तदर्शनस्य मुख्यभूतं तत्त्वं ब्रह्मान्वेषणं विद्यते। शिक्षोद्देश्यविषयेऽत्र दर्शने मोक्षाय बालान् सन्नाद्धीकरणमस्ति। आचार्यमनुसृत्य 'सा विद्या या विमुक्तये' इति वाक्यं स्मरन् ज्ञानेन (शिक्षया) एव मुक्तिः प्राप्तुमर्हति । वेदान्तस्य लक्ष्यमपि मोक्षप्राप्तिर्विद्यते ।

पुनश्च शिक्षोद्देश्येऽत्र दर्शने आध्यात्मोपनिषदि उक्तमस्ति - एकमेवाद्वितीयं नेह नानास्ति किञ्चन इत्यस्याभिप्रायोऽस्ति समग्रे विश्वे एवैऽव सत्ता विद्यते । अनेकस्य सत्ता नास्ति ।

अनेकतायामेकताया: दर्शनाय बालेषु अस्य दृष्टिकोणस्य विकास: करणीय:। अत्र ब्रह्मज्ञानमेव शिक्षोद्देश्यं भवितव्यम् । ब्रह्मज्ञानात्परं मानव: ब्रह्ममयो भवति । उक्तमपि 'ब्रह्मवेद ब्रह्मैव भवति'[१]।

शिक्षाया: उद्देश्यप्राप्त्यनन्तरं जीव: अत्र दर्शने स्वयमेव वदति 'अहं ब्रह्मास्मि'[२] । अस्यमहावाक्यस्य अनुभूतिरपि शिक्षालक्ष्यं भवितव्यम्।

ब्रह्मरूपात्मक-आत्मतत्त्वदर्शनाय उक्तमपि विद्यते तद्यथा - 'आत्मा वा अरे द्रष्टव्य: श्रोतव्यो मन्तव्यो निदिध्यासितव्य:'।[३]

अतोऽत्र शिक्षाया: लक्ष्यमस्ति आत्मन: दर्शनं, श्रवणं, मननं निदिध्यासनद्वारा साक्षात्कार:।

ब्रह्मविद्याया: अधिकारी (Claiment of Brahmavidya) एतत्सम्बन्धे वेदान्तसारे प्रतिपादितमस्ति -

(अधिकारी तु विधिवदधीतवेदवेदाङ्गत्वेनापाततोऽधिगतवेदार्थोऽस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरस्सरं नित्यनैमित्तिकप्रायश्चितोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्तसाधनचतुष्टयसम्पन्न: प्रमाता ।)[४]

अस्याशयो विद्यते नित्यकर्माणि यथा सन्ध्यावन्दनादि, नैमित्तिकानि यथा जातेष्टियागादि, प्रायश्चित्तानि - यथा चान्द्रायणव्रतादीनि, उपासनानि यथा शाण्डिल्यविद्यादीनि यो नित्यं सम्पादयति स एव वेदान्ताधिकारी भवति । अत्र साधनचतुष्टयेषु नित्यानित्यवस्तुविवेक:, इहामुत्रफलभोगविराग: शमादमादिषट्सम्पत्ति: (शम, दम, उपरति:, तितिक्षा, समाधानम्, श्रद्धा) मुमुक्षुत्वं (मोक्षस्य इच्छा मुमुक्षा) इति साधनचतुष्टयसम्पन्नभूते सति मानव: ब्रह्मविद्याया: अधिकारी भवितुमर्हति ।

**वेदान्तदर्शने शिक्षणपद्धति: (Methods of teaching in Vedanta Philosophy)**

ज्ञानं जीवस्य स्वाभाविकगुणोऽस्ति । आत्मा शुद्धचैतन्यस्वरूपोऽस्ति यथा अग्ने: ग्रीष्मापसरणं न भवति तथैव जीवात्मन: ज्ञानस्यापसरणं नैव भवितुमर्हति । परञ्च मायावशाद् आत्मा अज्ञाने मग्नो भवति । आचार्योऽत्र मायां भगवतोऽव्यक्तशक्तित्वेन मन्यते, तां अनिर्वचनीय-त्वेनापि ज्ञायते। इयमेव माया अज्ञानाविद्यारूपा वा सदसन्मध्ये वस्तु विद्यते । अस्या: मायाया: अज्ञानस्य वा

शक्तिद्वयमस्ति - आवरणशक्तिः विक्षेपशक्तिश्च । आवरणशक्तिस्तु सा विद्यते यत्र प्रमातुः दृष्टिपथे आवरणं दत्वा वस्तुनः सत्स्वरूपस्य परिचयो न भूत्वा तदावरणभूतं स्वरूपस्य परिचयो भवति यथा रज्जुः सर्पो नास्ति तथापि तस्मिन् सर्पावरणं प्रदर्श्य सर्पस्य भ्रमं कारयति पुनश्च विक्षेपशक्तिस्तावद् ब्रह्मणः नीत्वा स्थावरपर्यन्तं सम्पूर्णनामरूपात्मकजगतः उत्पाद्यमाना शक्तिर्विद्यते । यथा रज्जुविषयकाज्ञानं स्वशक्त्या अज्ञानावृत्तरज्जौ सर्पत्वभावना उत्पद्यते तथैव आत्मविषयकाज्ञानं स्वसामर्थ्येन आज्ञानावृत्तात्मनि विक्षेपशक्त्या सूक्ष्मशरीरतः ब्रह्माण्डपर्यन्तं आकाशादिप्रपञ्चस्योद्भावनां करोति ।

उक्ताज्ञानस्य निराकरणमावश्यकम्। अज्ञानेन बन्धनं, ज्ञानेन च मोक्षो भवति। आचार्यः ज्ञानप्राप्तये विवेकचूडामणौ उपदेशसाहस्त्रस्यां च वर्णितवान् । तमनुसृत्य सर्वप्रथमं शिष्याय विवेक-विराग शमादि षट्पदार्थानां मुमुक्षायाः च ज्ञानं दातव्यम् । पुनश्च सः आचार्यपार्श्वे गत्वा वदिष्यति 'अथातो ब्रह्मजिज्ञासा' इति। अत्र ब्रह्मज्ञानाय गुरुः विधिद्वयं स्वीकरोति-अध्यारोप-अपवादविधिश्च।

अध्यारोपविधौ वस्तुनि अवस्तुनः आरोपं कृत्वा ज्ञानस्य अध्यापनं क्रियते । रज्जौ सर्पत्वाध्यारोपभूते सति रज्जु वस्तु विद्यते, सर्पोऽवस्तु। इत्थमेव ब्रह्मणि जगतोऽध्यारोपो भवति तर्हि ब्रह्मवस्तु, जगद्वस्तु च भवति ।

अपवादविधिः युक्तितर्काधारितविधिः अस्ति । तर्कमाधृत्य अत्र प्रमाणीक्रियते यदात्मा शरीर-मन-बुद्ध्यादि विविधपदार्थातिरिक्तो विद्यते । ब्रह्मणि ये गुणाः आरोप्यन्ते अपवादविधौ ते गुणाः शनैः शनैः अपसार्यन्ते। वस्तुतः उभौ विधी एकस्यैव विधेः अङ्गौ स्तः ।

पुनश्च उत्तमच्छात्राणांकृते वेदान्तज्ञानस्य विधानं, मध्यमच्छात्राणां कृते उपासनायाः विधानं, निकृष्टच्छात्राणां कृते च कर्मणः विधानं वेदान्तदर्शने कृतमस्ति ।

**उपसंहारः -**

भगवताशङ्कराचार्येण प्रणीत वेदान्तदर्शनानुगुणं ब्रह्मसत्यं जगन्मिथ्या, ब्रह्मणः स्वरूपम्, जीवो ब्रह्मैव नापरः, ईशावास्यमिदं सर्वं, इत्येतानि आर्षवचनानि शैक्षिकपरम्परां परिपोषयन्ति।

आधुनिकशिक्षणप्रणाल्यामपि ब्रह्मण: स्वरूपनिर्द्धारणे सहकुर्वन्ति। किं च परमात्मा अद्वितीय:, सर्वव्यापक:, सर्वान्तर्यामि, साक्षि चैतन्यस्वरूप निर्गुणश्चेति। तत्सम: ततोऽधिकं वा न कश्चित् अस्मिन् संसारे। तस्यैव शक्ति: अपूर्वा विविधगुणमयि च। आधुनिकशिक्षणे एकाग्र चेतसा विषयस्य अध्यापनम् अध्ययनं क्रियते चेत् स: विषय: मानसिकस्तरे स्थिरो भवति। इति या अवधारणा वर्त्तते वास्तवत: तां अवधारणां परमात्मन: अद्वितीयभाव एव परिपुष्णाति। यतोहि एकस्यैव सर्वव्यापकस्य परमपुरुषस्य एकाग्रचेतसा भजनं चिन्तनं च क्रियते चेत् तस्य स्वरूपम् विज्ञातुं शक्यते ।

**सहायकग्रन्थसूची**


१. वेदान्तसार:, सदानन्दयोगिन्द्र: ।

२. सामान्यदर्शनम्, प्रो. नीलकण्ठपति।

३. शिक्षादर्शनम्, डॉ. सोमनाथसाहु।

४. भारतीयदर्शन कि चिन्ताधारा, प्रो.राममूर्त्तिशर्मा ।

५. हरिप्रभा, वार्षिकशोधपत्रिका, हरियाणा विश्वविद्यालय:।



**शोधच्छात्र:, शिक्षाशास्त्रविभाग:**

**श्रीसदाशिवपरिसर:, पुरी**

# आचारशुद्धेः वैशिष्ट्यम्

बावलुप्रामानिकः

सनातनसंस्कृतौ धर्मशास्त्रमेव समाजं नियन्त्रयति। तत्रापि आचारः एव अस्माकं संस्कृतिम् अन्यसंस्कृतितः व्यावर्तयति। सर्वत्र स्मृत्यादिषु आचारः वर्णितः अस्ति। आचारः कथं भवेत् इति विषये दिङ्निर्देशः विहितः अस्ति। आचारस्य विषये कथमेवंरीत्या विशेषदृष्टिः आसीत् इति चेत् पुरा सर्वे आधिक्येन वैदिककर्ममार्गे आसन्। अनुष्ठानानुष्ठेयप्रक्रिया न सरला भवति। समीचीनतया कृते एव कर्मणि तत् फलं ददाति। वैदिकवाक्यानां बोधाय मीमांसाशास्त्रमागतम्। तेन किञ्चित् अपि त्रुटिः कर्मानुष्ठाने न भवेत् इति स्थिरीकर्तुम्। वैदिककर्माणामेव सुष्ठु प्रतिपादनं कथं भवेत् तदर्थं मनुष्याणाम् आचारेऽपि काचित् व्यवस्था विधेया। सदाचारसम्पन्नः जनः एव सम्यक् कर्मानुष्ठानं कर्तुं समर्थः। तस्य फलप्राप्तिरपि अनायासेन भवति। एतत् सर्वं बुद्धौ निधाय`व अस्माकं पूर्वजैः आचारव्यवस्था सम्पादिता आसीत्।

आदौ ज्ञेयम् आचारः नाम किमिति। तत्र विष्णुः एवं वदति-

श्रुतिस्मृत्युदितो धर्मः साधुभिर्यश्च सेवितः।
तमाचारं निषेवेत धर्मकामो जितेन्द्रयः।।[१]

तस्यार्थः यः धर्मः श्रुतिना आदिष्टः तथा स्मृतिना उपदिष्टः, साधुभिश्च सेवितः तं धर्मम् इच्छन् जितेन्द्रियः निषेवेत। स एव आचारः। मनुरपि तथैव वदति श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः[२] इति। अतः आचारो नाम वेदादिष्टः स्मृत्युपदिष्टः धर्मविशेष इति आगतम्। आचारः प्रथमो धर्मः इति वेदोविदो विदुः[३] इति वचनमपि तत्र प्रमाणयति। आचारस्य किं प्रयोजनमित्यपि वक्तव्यम्। प्रयोजनं विना कस्मिन्नपि कार्ये कस्यापि प्रवृत्तिः न भवति। तत्र एवमुच्यते दृष्टादृष्टफलमस्ति आचारस्य। केषांचित् आचाराणां दृष्टं फलं भवति प्रजासुखशान्त्यादि। अदृष्टमपि फलमस्ति पुण्यादिकम्। तथाहि मनुः-

आचारल्लभते ह्यायुराचारादीप्सिताः प्रजाः।
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम्।।[४]

अत्र आचारस्य दृष्टादृष्टरूपं प्रयोजनं मनुना कथितम्। भारतस्य समाजे तथा संस्कृतौ या आचारव्यवस्था विहिता अस्ति सर्वमपि धर्मस्य कृते एव। वेदविहितकर्मणां सुष्ठु परिपालनाय आचारसंहितादिरचनं कृतम्

अस्माकं पूर्वजैः। समाजव्यवस्थापि कृता वर्तते धर्मं मनसि निधाय। व्याकरणादिशास्त्रस्यापि प्रवर्तनं वैदिकयज्ञानां रक्षणार्थं तेषां सम्यक् परिपालनार्थमेव जातम्। पतञ्जलिना व्याकरणस्य यानि प्रयोजनानि उक्तानि तानि आधिक्येन वैदिकयज्ञकर्मणः सुष्ठु अनुष्ठानाय कथितानि। धर्मस्य तथा माहात्म्यमस्ति अस्माकं भारतस्य समाजव्यवस्थासु सांस्कृतिकपद्धतौ आचारादिषु च।

विवेकानन्दस्वामिचरणैः उक्तं-हिन्दूनां भोजनं धार्मिकं पानं धर्मार्थं तस्य निद्रा धर्माय आचारादिकं धार्मिकं तस्य विवाहादि धार्मिकः.....एतस्य एकमेव कारणम्। तद्धि अस्याः जातेः सजीवता। अस्य देशस्य (भारतस्य) प्रेरणा एव धर्मः। यस्मात् धर्मोपरि इतोऽपि आघातः नायातः तस्मादेव एषा जातिः जीविता अस्ति। अयं देशः निष्प्राणः नास्ति।[५]

अतः धर्मस्य प्राधान्यम् अस्मिन् देशे सर्वत्र अस्ति इति तु सत्यम्। तदर्थं च आचारा विहिताः। आचारस्य लक्षणं किमिति तु उक्तम्। तस्य प्रवर्तकाः भवन्ति मनुयाज्ञवल्क्यादयः। आचारे किं किम् अन्तर्भवति तदिदानीं समुपस्थाप्यते। याज्ञवल्क्यस्मृत्यनुसारम् आचारस्य विषयाः प्रस्तूयन्ते। ब्रह्मचर्यं विवाहः वर्णजातिविवेकः गृहस्थधर्मः स्नातकधर्मः भक्ष्याभक्ष्यविषयः द्रव्यशुद्धिविषयः दानं श्राद्धः गणपतिकल्पः ग्रहशान्तिः राजधर्मः इत्येवम्। एतेषु विषयेषु द्रव्यशुद्धिः भवति कश्चित् विषयः।

आचारे शुद्धेः महत् स्थानमस्ति। आचारे ये विषयाः उक्ताः ते अनुष्ठातुं न शक्याः यदि मनुष्यः शुद्धः नास्ति। शुद्धः जन एव सर्वेषु कर्मसु अधिकारी भवति। शुद्धिः नाम वेदविहितकर्मसु अधिकारत्वप्रतिपादकः धर्मविशेषः। अतः आचारे शुद्धेः कियत् महत्त्वं स्थानं वा अस्ति इति तु ज्ञायते एव। ये विषयाः आचारे उक्ताः यथा दानं विवाहः गृहस्थधर्मः इत्यादयः तेषां शुद्धे सत्येव अनुष्ठानाधिकारित्वमिति विशेषतः स्मृतिषु प्रतिपादितम्। अतः शुद्धिः महत् गुरुत्वम् आवहति अन्येषाम् अनुष्ठानानां सम्पादनाय।

शुद्धौ किं किम् अन्तर्भवति तद्विषये विस्तरेण आलोच्यते यत्- सुवर्णादिपात्राणां शुद्धिः यज्ञियपात्राणां शुद्धिः लेपविशिष्टपात्राणां शुद्धिः वस्त्रस्य शुद्धिः भूशुद्धिः उदकशुद्धिः पशुशुद्धिः मुखशुद्धिः इत्येते विषयाः शुद्धौ अन्तर्भवन्ति। अशुचिविषयाः के तेऽपि ज्ञातव्याः। अशुचिमाधारीकृत्य शुचेर्विधानं कृतमस्ति।

तत्र शुद्धावपि विविधाः भेदाः सन्ति। यथा शरीरशुद्धिरिति कश्चित् विषयः। तत्र प्रातः आरभ्य किं किं करणीयं शरीरशुद्ध्यर्थं तत् सर्वं स्मृत्यादिषु निहितमस्ति। आदौ मूत्रपुरीषोत्सर्गविधिः। तत्र मूत्रपूरीषे कुर्याद्दक्षिणे दक्षिणपरां वा इति आपस्तम्बः। तस्यार्थः शयनस्थानात् दक्षिणस्यां दिशि नैर्ऋत्ये कोणे वा मलमूत्रत्यागः

कार्यः। सर्वदा ग्रामाद् बहिर्गन्तुं न शक्यते। रात्रौ चौरभयं भवति तथा व्याघ्रादिभयं भवति। अतः तदर्थं पृथक् विधानं वर्तते। अस्तमिते च बहिर्ग्रामादाराच्चावसथान्मूत्रपूरीषयोः[६] इति कथनम् अस्ति। सूर्यास्तानन्तरं ग्रामस्यान्तः तथा गृहस्य समीपे तत् कर्तुं शक्यते इत्यर्थः। ततश्च स्नानादिषु शौचविधिः अस्ति। हस्यपादौ कथं प्रक्षालनीयौ, कुत्र कस्मिन् अंशे मृत्तिका कियती देया इत्यादिकमपि निर्दिष्टमस्ति धर्मशास्त्रेषु। स्नानसमये एव दन्तधावननियमा अपि दृश्यन्ते। यथा दक्षः वदति-

उषःकाले। तु सम्प्राप्ते शौचं कृत्वा यथाविधि।
ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम्।।[७]

अत्र किं दन्तधावनं किमर्थं धर्मशास्त्रेषु उपदिष्टमस्ति यतो हि लौकिकं कर्म तत् इति न वाच्यम्। दन्तधावनस्यापि धर्मे प्रयोजनमस्ति। तस्मादेव धर्मशास्त्रे तस्य उल्लेखः अस्ति। याज्ञवल्क्यः वदति प्रातः सन्ध्यामुपासीत दन्तधावनपूर्वकम्[८] इत्येवम्। अथ च स्नानविधिः अस्ति। तत्रापि विविधाः भेदाः सन्ति। यथा प्रातः स्नानादिः अशुचिस्पर्शे स्नानं पिण्डदानपूर्वकं स्नानं श्मश्रुकर्मणि कृते स्नानं मैथुने कृते स्नानं दुःस्वप्नदर्शने स्नानम् एवं स्नानभेदाः सन्ति।

तथैव स्नाननिषेधोऽपि वर्तते। यथा मध्यरात्रे स्नानं न कुर्यात् इति बहुभिः निषिद्धमस्ति। देवलः वदति ग्रहणसमये संक्रान्तिसमये विवाहे आत्मीयमरणे पुत्रादिजन्मनि निशि च स्नानदानादिकं न कुर्यात्।[९] मनुः तथाह-

न स्नानमाचरेत् भुक्त्वा नातुरो न महानिशि।
न वासोभिः सहाजस्त्रं नाविज्ञाते जलाशये।।[१०]

भोजनं कृत्वा स्नानं निषिद्धमस्ति तथैव रात्रौ। बहुवस्त्रादिकं धृत्वा स्नानं निषिद्धम्। यदि चाण्डालादिस्पर्शनिमित्तं स्नानं तर्हि तत् वस्त्रादिना कर्तुं शक्यम्। बहुवारं स्नानं न कुर्यात्। अज्ञाते जलाशयेऽपि स्नानं निषिद्धमस्ति तत्र मकरादिः स्थातुमर्हन्ति इति हेतोः। एवं स्नाननिषेधो अपि वर्तन्ते।

एवं धर्मार्थखं किञ्च लौकिकव्यवहारार्थं शुद्धिविषयाः आचारे विहिताः वर्तन्ते। शुद्धौ प्रातरारभ्य मध्यनिशिपर्यन्तं मानवानां जीवनक्रमः निर्धारितः अस्ति। अतः आचारे शुद्धेः महत् स्थानमस्ति इति तु निश्चप्रचमेव।

### शुद्धेः स्वरूपम्

शुद्धिः अथवा शौचं धर्मशास्त्रस्य कश्चित् महान् गहनः आलोच्यश्च विषयः भवति। प्रायः सर्वेषु धर्मशास्त्रेषु शुद्धिविषये आलोचना दृश्यते। शुध..इति धातोः भावे क्तिन्प्रत्यये शुद्धिशब्दः निष्पद्यते। योगशास्त्रेऽपि नियमेषु शौचस्य उल्लेखः वर्तते। लौकिकस्तरे आध्यात्मिकक्षेत्रे वा मनुष्यः यत्किमपि कर्तुमिच्छति चेत् प्रथमतः स शुद्धः भवेत्। का नाम शुद्धिः। अत्रोच्यते मित्रमिश्रेण शुद्धिर्नामाशौचसंसर्गभावः।[११] यत्र अशौचसंस्पर्शः सर्वथा नास्ति तत्र शुद्धिरस्ति इत्यर्थः। किं नाम अशौचम्। तथा हि सन्ध्यापञ्चमहायज्ञादिकर्मानधिकार-सम्पादकोऽधिकारविशेषः। तस्यार्थः यस्मिन् सति सन्ध्यानित्यकर्मसु तथा पञ्चमहायज्ञेषु मनुष्यः स्वाधिकारं नश्यति तदेव अशौचम्। एवमुक्तमस्ति-

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि।[१२]
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसुः।।[१३]

मनुष्यः यदा अशुद्धः भवति तदा तस्य शुद्धिः सम्पादनीया। तदर्थमेव शुद्धिप्रक्रियायाः माहात्म्यम्। शुद्धिर्नाम क्षालनादिजन्यः पुरुषगतोऽष्टविशेषः। वाचस्पतिमिश्रेण एवमुक्तं शुद्धिलक्षणम्-तत्र विहितकर्मार्हत्वप्रयोजको धर्मविशेषः शुद्धिः।[१४] शुद्धिकौमुदीकारेणापि समानमेव लक्षणमुक्तम्-तत्र कर्मार्हत्वसम्पादकसंस्कारविशेषः शुद्धिः।[१५]

शुद्धितत्त्वे बहूनां विषयाणां शुद्धिविषये आलोचितमस्ति। प्रत्येकं विषये शुद्धिप्रक्रिया भिन्ना वर्तते। तत्र कस्मिन् के स्मृतिकाराः किं वदन्ति तदपि ग्रन्थकारेण सुष्ठु निहितमस्ति। अशौचभेदेन शुद्धिप्रक्रिया अपि भिद्यते। मित्रमिश्रमतानुसारं शुद्धिद्वारा मनुष्यादिचेतने किमपि अदृष्टं जायते। ताम्रकांस्यादिषु अचेतनेषु पदार्थेषु अशुद्धिस्पर्शनजन्यः अम्लादिसंसर्गनाश्यः आधेयशक्तिविशेषः न तु अदृष्टं किमपि। विज्ञानेश्वरेण याज्ञवल्क्यस्मृत्याधारेण अशौचविषये एवमुक्तमस्ति-अशौचशब्देन च कालस्नानाद्यपनोद्यः निमित्तभूतः पिण्डोदकदानादिनिधेः अध्ययनादिपर्युदसस्य पुरुषगतः कश्चनातिशयः कथ्यते न पुनः कर्मानधिकारमात्रम्। अत्रेदमवधेयं पूर्वं मित्रमिश्रमतानुसारं यथोक्तम् केवलं कर्मसु अनधिकारो भवति न तथात्र। अतः शुद्धिस्तु सर्वथा सम्पादनीया सा चेतने भवतु वा अचेतने। योगशास्त्रेऽपि शौचं द्विविधमिति उक्तं बाह्यशौचम् अन्तःशौचम्। बाह्यं नाम शारीरिकम् अन्तःशौचं नाम मानसिकम्। धर्मशास्त्रेऽपि बाह्यान्तरभेदेन द्वैविध्यं कथितं वर्तते हारीतादिषु।

**शुद्धिभेदाः**

अत्र ये शुद्धिविषयाः रघुनन्दनाचार्यैरुक्ता ते क्रमेण उच्यन्ते। स्त्रीणां पतिसहवासः, स्वामिनः अनुगमनं, योगसिद्धिः, कर्मणां स्वभावतः बहुफलोत्पादकत्वं बाधे सति एकफलोत्पादकत्वम्, अशौचसंकरः, गुरुणा अशौचेन ,संस्पर्शे जाते लघ्वशौचस्य वृद्धिः, पूर्वजातस्य अशौचस्य वर्धनहेतवः, अशौचान्तदिनस्य कर्म, जननाशौचे शुद्धिः, अपराशौचेऽपि नवजातस्य जातकर्मव्यवस्था, गर्भस्रावे सति अशौचव्यवस्था, स्त्रीबालकानां सद्गुणनिरूपणं, पूर्वं जातस्य अशौचस्य कलौ प्रतिषेधः, पक्षिणीलक्षणं, विदेशस्थस्य अशौचः, सपिण्डादीनाम् अशौचम्, अशौचकाले सन्ध्यावन्दनादिपरित्यागव्यवस्था, अशौचजनसमीपात् ग्राह्यवस्तुनिर्णयः, सद्यः अशौचप्राप्तिः, शवानुगमने अशौचादि द्रव्यशुद्धिविचारः, सूतिकास्पर्शेण अशौचनिर्णयः, ज्ञातिमृत्युना अशौचनिर्णयः, मुमूर्षो मृतस्य च कर्तव्यनिर्णयः, कुशपुत्रदाहस्य इति कर्तव्यता, प्रेतस्नानादिप्रक्रिया, प्रेततर्पणादिक्रिया, शोकापनोदनव्यवस्था, मृताणां रात्रावपि पिण्डदानप्रक्रिया, अशौचान्तकर्तव्यानि।

इत्येवं कुत्र कीदृशी शुद्धिः सम्पादनीया इति श्रीमता रघुनन्दनेन ग्रन्थादौ प्रत्यपादी। एतद्भेदानुसारं शुद्धिभेदा अपि सम्भवन्ति। सामान्यतः सर्वेषु धर्मशास्त्रेषु एतासां शुद्धीनां विषये वर्णितमस्ति।

**अशौचस्वरूपं तद्भेदाश्च**

शुचेर्भावः शौचं शुचित्वं वा। न शौचम् अशौचम्। सामान्यतः धर्मशास्त्रेषु अशौचविषये मतभेदाः सन्ति। मित्रमिश्रेण एवमुक्तमस्ति अशौच सन्ध्यापञ्चमहायज्ञादिकर्मानधिकारसम्पादकोऽतिशयविशेषः।[१६] वाचस्पतिमिश्रेण शुद्धिचिन्तामणौ एवमुक्तं-विहितकर्मानर्हत्वप्रयोजकः अशुद्धिः।[१७] तस्यार्थः पूर्वेण समं समान एव विहितकर्मणाम् अनधिकारित्वं भवति यस्यामवस्थायां सा अशुद्धिः। एतस्य पुष्टिः कृष्णमिश्रेण शुद्धितत्त्वे कृता-

सन्ध्या पञ्चमहायज्ञा नौत्यकं स्मृतकर्म च।
प्रेतपिण्डक्रियावर्जमाशौचे विनिवर्तते।।[१८]

शुद्धिकौमुदीकारेणापि उक्तं-शुद्ध्यभावे श्रुतिस्मृतियाज्ञिकवर्णाश्रमादिकर्मसु अशुद्धस्य जनस्य जलभूमिपात्रादिवस्तूनाञ्च सम्पर्काभावः। शुद्धिसंस्कारानन्तरम् अशुद्धिकालातीते च तेषां तत्सम्पर्काधिको भवति। किञ्च अशौचं हि पिण्डोदकदानादीनां कर्मणां निमित्तभूतं तदर्थमवश्यं विचारणीयम्।[१९]

द्विविधमशौचं भवति बाह्यम् आभ्यन्तरं च। योगशास्त्रेऽपि नियमेषु शौचमस्ति। तत्रापि बाह्यशुद्धिः आन्तरशुद्धिरिति द्वैविध्यं वर्णितमस्ति। बाह्यं शौचं पुनस्त्रिविधं कुलशौचम् अर्थशौचं शारीरम्। तत्र कुलशौचं नाम सूतकमृतकयोर्दशरात्रमुभयतः कुलस्याशौचम्। उभयपदेन सूतकमृतकयोः इति मन्तव्यम्। मित्रमिश्रमतानुसारं जशरात्रपदेन त्र्यहादेरपि ग्रहणम्। सूतिकापदेन रजस्वलादीनामपि ग्रहणम्। रजस्वलाशौचं तु न शारीराशौचे अन्तर्भवति। मनुना जननाद्यशौचप्रकरणे रजस्वलाशौचस्य अभिधानं कृतमित्यतः। कासांचन अशुद्धितत्त्वानां विवरणं दीयते।

**जननाशौचम्-**

वेदाग्निरहितस्य विप्रस्य सपिण्डजन्मनि दशदिनं यावत् अशौचं तिष्ठति। शूद्रस्य तु एकमासं यावत् अशौचं तिष्ठति। मनुरेवं वदति-जननेऽप्येवमेव स्याद्विप्राणां शुद्धिमिच्छताम्।[२०] प्रेतशौचे यथा अशुचिः विशेषतः अङ्गास्पर्शनं सर्वेषामेव भवति न तथा सूतकाशौचे। अत्र जननाशौचे केवलं मातापित्रोरेव अशौचं तिष्ठति। तत्र माता दशदिनं यावत् अशुचिर्भवति। अशुचिर्नाम अङ्गास्पुर्शनाशुचिः। पिता तु स्नात्वा एव शुद्धो भवति। वस्तुतः एतत् केवलम् अङ्गास्पृश्यत्वविधेः उपक्रममात्रम्। परं पितरपि दिनत्रयं यावत् अशौचं तिष्ठति इति मनु वदति। सद्यःजातस्य यदि दशदिनाभ्यन्तरे मरणं भवति तर्हि तस्य आत्मीयैः शावशौचं न कर्तव्यं यतो हि जननशौचं तस्य अस्त्येव। तथाहि वदति मनुः

दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः।
शावाशौचं न कर्तव्यं सूत्याशौच विधीयते।।[२१]

अस्मिन् प्रसङ्गे स्मृत्यन्तरं तु एवमस्ति जाते मृतजाते वा कुलस्य सद्यःशौचम्। एतत्तु शिशुमरणनिमित्तं न। मरणाशौचनिमित्तं केवलं स्नानमिति तु अस्त्येव। यदि नाभिच्छेदात् प्रागेव जातः म्रियते तर्हि केवलं मातुः सम्पूर्णं सूतकं भवति सपिण्डानां केवलं जन्ममात्रं त्रिरात्रं भवति न मृत्युनिमित्तं किञ्चित्। जैमिनिः वदति यावत् नालच्छेदो न भवति तावत् सूतककार्यं किमपि न भवति। छिन्ने एव नाले सूतकं विधीयते।[२२] नालच्छेदानन्तरं शिशूपरमे सपिण्डानां दशाहजन्माशौचमपरमिति केचन। मन्वादिमते यथा केवलं मातुरेव दशाहं अन्येषां न इति न। संवर्तस्यापि मनोरिव अभिप्रायः। जननिमित्तम् अस्पृश्यत्वं केवलं मातुरेव दशदिनम्। अन्येषां तु स्नानमात्रेण शुद्धिः।

जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते।
माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः।।[२३]

अन्ये केचित् वदन्ति सपिण्डानाम् अस्पृश्यत्वं नास्त्येव अतः तेषां स्नानमपि नापेक्षितम्। यथा अङ्गिराः वदति-सूतिके सूतिकावर्जे संस्पर्शे न निषिद्ध्यते। वसिष्ठस्यापि इदमेव मतम्। देवलस्य मतं तु जनने अथवा मरणे अशौचं तु नित्यम् अनुधावति। विष्णुर्वदति-ब्राह्मणस्य सपिण्डानां जननमरणयोर्दशाहमाशौचम्।[२४] शङ्खस्य मते तु जनने मरणे चैव सपिण्डानां द्विजोत्तमः। दशाहाच्छुद्धिमाप्नोति[२५] इति। बृहस्पतिमतानुसारं सूतकाशौचं तु केवलं मातुरेव भवति पिता स्नात्वैव शुद्धो भवति अन्येषां ज्ञातिनां तु तदपि नास्ति। पराशरमतेन तु प्रसूतवतीं मातरं यदि षडङ्गवित् विप्रः स्पृशति तर्हि तस्य सूतकाशुद्धिः भविष्यति।

यदि पत्न्यां प्रसूतायां द्विजः सम्पर्कमिच्छति।
सूतकं तु भवेत्तस्य यदि विप्रः षडङ्गवित्।।[२६]

ब्रह्मपुराणे एवमस्ति जातस्य मुखं पिता पश्यति चेत् स्नानेनैव तस्य शुद्धिः। ब्राह्मणी क्षत्रिया वैश्या एतासां दशभिर्दिनैः शुद्धिर्भवतिः स्पष्टुं च शक्यते। शुद्रायास्तु त्रयोदशदिनानन्तरं शुद्धिर्भवति। पैठिनसिमतानुसारं सूतिका पुत्रवती यदा विंशतिदिनानन्तरं स्नाति तदैव सर्वकर्मसु अधिकारो भवति। एवं जननाशौचविषये विविधानि मतानि प्रस्तुतानि।

**मरणाशौचम्-**

मनुः वदति-

शुद्ध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति।।[२७]

तस्यार्थः कुलस्थस्य कस्यचित् मरणे कस्य वर्णस्य कियत् पर्यन्तम् अशुचिः तिष्ठति। ब्राह्मणानां दशदिनं यावत् अशुचिः तिष्ठति। क्षत्रियाणां द्वादशदिनं यावत्। वैश्यानां पञ्चदशदिनं यावत् अशुद्धिः। तथा शूद्राणाम् एकमासम् अपेक्षते शुद्ध्यर्थम्। बृहस्पतिः किञ्चित् विशेषं वदति-

दशाहेन सपिण्डास्तु शुद्ध्यन्ति प्रेतसूतके।
त्रिरात्रेण सकुल्यास्तु स्नात्वा शुद्ध्यन्ति गोत्रजाः।।[२८]

अस्यार्थः सपिण्डे सप्तपुरुषावधौ कश्चित् म्रियते चेत् दशदिनं यावत् अशुद्धिः भवतकि। सकुल्ये दशमान्तेषु कश्चित् मरणं गच्छति चेत् रात्रित्रयमेव अशौचं तिष्ठति। केवलं गोत्रे कश्चित् म्रियते चेत् स्नानेनैव शुद्धिर्भवति। पराशरमहर्षेस्तु मतमिदं यदि जनः मृतकस्य जातकस्य वा सम्पर्के अस्ति तदेव अशौचं भविष्यति यदि सम्पर्कः नष्टः तदा न कापि अशुद्धिर्भविष्यति। तथा हि-

सम्पर्काद्दुष्यते विप्रो जनने मरणेऽपि वा।
सम्पर्कविनिवृत्तानां न प्रेतं नैव मृत्यकम्।।[२९]

तत्रैव देवलस्य मतं भिन्नं वर्तते। सपिण्डेषु अथवा मातृबान्धुषु यदि अशौचं भवति तर्हि तत् अनुवर्तते। पराशरेण यथा उक्तमासीत् सम्पर्के विनिवृत्ते न अशौचमिति न तद् एतन्मतेन। अत्र उक्तं यत्र क्वापि वा गच्छतु अशौचं तु अनुवर्तते।

जनने मरणे नित्यमशौचमनुधावति।
सपिण्डान् मातृबन्धूंश्च यत्र क्वचन गच्छतः।
योनिज्ञातिद्विजेष्विष्टमाशौचं सहवासिषु।
भर्तृगुर्वोरशौचं स्यान्मृत्युप्रसवकारणम्।
कारणाद्गच्छन्प्रेष्यत्वं तदाशुच्यं न तान् व्रजेत्।।[३०]

योनिशब्देन पितृबान्धवानां ग्रहणम्। ज्ञातिरिति सकुल्यानाम्। अत्र शंका सहवासिषु इति पदे सम्भवति। पराशरमतानुसारम् अत्रापि सहवासे सत्येव अशौचं भवति अन्यथा न इति चेत् तत्र कृत्यकल्पतरुकारः एवं वदति-सहवासिषु इति पदमर्थाद्द्विजविशेषणम्। अन्येषां पितृबन्धुप्रभृतीनामसहवासिनामप्यशौचयोगित्वात्।[३१] सपिण्डाशौचविषये बहूनां नानामतानि सन्ति। तानि यथामति उपस्थाप्यन्ते। मनोः मतं तु एवमस्ति-सपिण्डेषु ब्राह्मणानां दशदिनं यावत् अशौचं तिष्ठति।[३२] शङ्खस्तु वदति सपिण्डेषु केवलं त्र्यहमेव अशौचं तिष्ठति यदि विप्रः अग्निवेदसमन्वितः भवति। तथा हि-

जनने मरणे चैव सपिण्डानां द्विजोत्तमः।
त्र्याहाच्छुद्धिमवाप्नोति योऽग्निवेदसमन्वितः।।[३३]

बृहस्पतिरपि समानं वदति। यदि विप्रः अग्निसंयुतः तर्हि त्रिषु दिनेषु शुद्धो भविष्यति। यदि अग्निहीनः भवति तर्हि दशसु दिनेषु शुद्धो भविष्यति। यश्च सततं वैश्वदेवहोमं स्वाध्यायं च करोति तस्य न कापि अशुद्धिः भविष्यति।

त्रिरात्रेण विशुद्ध्येत्तु विप्रो वेदाग्निसंयुतः।
पञ्चाहेनाग्निहीनस्तु दशाहाद्ब्राह्मणब्रुवः।।
स्वाध्यायः क्रियते यत्र होमश्चोभयकालिकः।
सततं वैश्वदेवश्च तत्राशौचं न विद्यते।।[३४]

अन्यवर्णानां विषये उक्तं गौतमेन-शावमशौचं दशरात्रमनृत्विग्दीक्षितब्रह्मचारिणां सपिण्डानाम्। एतादशरात्रं क्षत्रियस्य। द्वादशरात्रं वैश्यस्य। अर्धमासमेके। मासं शूद्रस्य।[३५] शातातपस्यापि इदमेव मतम्। याज्ञवल्क्यस्यापि समानः अभिप्रायः। जावालियमयोः क्षत्रियशूद्रयोः विषये मतैक्यमस्ति केवलं वैश्यस्य विंशतिदिनं यावत् अशुद्धिरिति उक्तम्। पैठीनसिमतेन क्षत्रियस्य न द्वादशदिनम् अपि तु षोडशाहम्। वैश्यस्यापि विंशतिरात्रमेव।

**कालाशौचम्-**

**अङ्गाशौचम्-**

ब्रह्मपुराणानुसारम् ऋत्विजां मधुपर्कग्रहणानन्तरं यजमानस्य दीक्षायाः परं यदि अशौचं भवति तर्हि तद् अशौचं तत्कर्मसमाप्तिपर्यन्तं यजमानं न प्राप्नोति। तथावस्थायां यागसमाप्तिः कार्या। यागसमाप्तौ न दोषः। यदि यागमध्ये यजमानपत्न्याः रजोदर्शनं भवति तदा तच्छुद्धौ एव यागसमाप्तिर्भविष्यति। श्रौतादिकर्म यथा जातेष्ट्यादिकं अशौचागमपतिते आद्ये पर्वणि कार्यं न तु अशौचमध्ये। मृते सति चतुर्थे दिनं व्याप्य अङ्गाशौचं तिष्ठति। दिवं गते तत्कुले सर्वेषां त्र्यहं यावत् अशौचं तिष्ठति। अशौचं नाम स्पर्शनं तेषां न भवति। जननाशौचे तु न सर्वेषाम् अशौचम्। मातुः दशदिनं यावत् तिष्ठति केवलं तदशौचम्। तस्याः स्पर्शनं न कार्यमित्यर्थः। पितुः तु स्नानेनैव शुद्धिः तन्नाम स्पर्शनयोग्यता आगच्छति। यदि पिता सूतिकां मातरं स्पृशति तर्हि तस्यापि अङ्गाशौचं जायते।

## पादटिप्पणी

१.आ.द.प्राक्-१
२.आ.द.प्राक्-१
३.आ.द.प्राक्-१
४.म.सं.,आ.द.प्राक्-१
५.मे.जी.त.ध्ये.,पृ.-५
६.आ.द.-२४
७.आ.द.-१५०
८.आ.द.-१५१
९.आ.द.-२४१
१०.म.सं.,अ-४,श्लो.-१२९
११.वी.मि.पृ.-८
१२.नित्या.प्र.पृ.-२९१
१३.द.स्मृ.-२.२३
१४.शु.चि.पृ.-२
१५.शु.कौ.पृ.-६७
१६.वी.मि.पृ.-८
१७.शु.चि.पृ.-२
१८.शु.सर्व.पृ.-२
१९.शु.कौ.पृ.-५७
२०.म.सं ५/६१
२१.म.सं
२२.शु.म.पृ.-११
२३.शु.म.पृ.-११
२४.कृ.क.,शु.का.पृ.-१९
२५.कृ.क.शु.का.पृ.-१९
२६.परा.स्मृ.अ-३,श्लो.-२७,२५
२७.म.सं-५/८३

२८.शु.प्र.पृ.-१ २९.शु.चि.पृ.-५ ३०.कृ.क.शु.का.पृ.-४

३१.कृ.क.शु.का.पृ.-४ ३२.म.सं.अ.-५,श्लो.-५१ ३३.कृ.क.शु.का.पृ.-४

३४.कृ.क.शु.का.पृ.-४ ३५.कृ.क.शु.का.पृ.-१२

**सहायकग्रन्थसूची**


श्रीदत्तोपाध्यायप्रणीतः आचारदर्शः टीका.पण्डित दिगम्बर झा, द्वितीयसंस्करणम्, विहार, कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयः,२००३।

कर्मप्रदीपः (छन्दोगपरिशिष्टम्) महामहोपाध्याय नारायण उपाध्याय, प्रथमसंस्करणम्, कलिकाता, एशियाटिक सोसाइटि,१९०९।

कात्यायनस्मृतिः (स्मृतिसन्दर्भः) श्रीमन्महर्षिप्रणीत, धर्मशास्त्रसंग्रहः, मन्वादिदशस्मृत्यात्मकः, तृतीयभागः, दिल्ली, नागप्रकाशन,१९८८।

भट्टलक्ष्मीधरः कृत्यकल्पतरुः (शुद्धिकाण्डम्) Edited by-K.V.RANGASWAMI AIYANGAR Oriental Institute, Boroda,1950, 1st edition.

दक्षस्मृतिः (स्मृतीनां समुच्चयः) सम्पा.विनायक गणेश आपटे, प्रथमसंस्करणम्, पुने, आनन्दाश्रमसंस्कृतग्रन्थावलिः,१९२९।

वाजपेयि श्रीनरसिंहकृतः नित्याचारप्रदीपः सम्पा.पण्डितश्रीकुलमणिमिश्रशर्मणा, प्रथमसंस्करणम्, पुरी, श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठम्,१९८४।

पराशरस्मृतिः सम्पा.डॉ.जयकृष्णमिश्रः, प्रथमसंस्करणम्, वाराणसी, चौखम्बा संस्कृत सीरीज अफिस,२०११।

मनुसंहिता सम्पा.मानवेन्दु वन्द्योपाध्याय, द्वितीयसंस्करणम्, कलकाता, संस्कृत पुस्तक भाण्डार,२००९।

संस्कृतानुवादः, मेरा जीवन तथा ध्येय, श्रीरामकृष्ण आश्रम नागपुर, अष्टम संस्करणम् २०.०१.१९७८,पृ. - ५ (२७जानवरी १९०० वर्षे स्वामी विवेकानन्दः केलिफोर्निया-प्रदेशे शेक्सपियर-क्लाव-मध्ये भाषणं दत्तवान्। तस्य अंशविशेषस्य अनुवादोऽयम्।)

पण्डितमित्रमिश्रप्रणीत: वीरमित्रोदय: सम्पा.म.म.श्री.नित्यानन्दपन्तपर्वतीय, द्वितीयसंस्करणम्, वाराणसी, चौखम्बा संस्कृत सीरीज अफिस,१९८७।

मिश्रवाचस्पतिप्रणीत: शुद्धिचिन्तामणि: सम्पा.डॉ.जयन्तमिश्र:, प्रथमसंस्करणम्, दरभङ्गा, कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालय:,१९८५।

श्रीमदाचार्यकृष्णमिश्र शुद्धिप्रदीप: सम्पा.पण्डितप्रवरश्रीविश्वनाथशास्त्रिभि: प्रथमसंस्करणम्, वारामसी, चौखम्बा संस्कृत सीरीज आफिस,१९५४।

भट्टनीलकण्ठविरचितम् शुद्धिमयूख: डॉ.वेणीमाधवशास्त्रिणा मुसलगाँवकर, द्वितीय खण्ड, द्वितीयसंस्करणम्, दिल्ली,चौखम्बा संस्कृत प्रतिष्ठान,१९८६।

म.म.मिश्रकृष्णविरचितम् शुद्धिसर्वस्वम् डॉ.विश्वनाथस्वाईं, प्रथमसंस्करणम्, पुरी, श्रीमतीजयन्तीदेवी सर्वोदयनगरम्,१९९३।

Acharya Govindananda **SHUDDHIKAUMUDI** Edited by Pandit Kamalakrishna Smritibhusana, Asiatic Socitey Of Bengal, Culcutta, 1st Edition,1905.

विद्यावारिधि: शोधच्छात्र:
धर्मशास्त्रविभाग:
राष्टियसंस्कृतविद्यापीठम्,
तिरुपति:,आन्ध्रप्रदेश:

# पुराणस्मृतिषु आश्रमनिमित्तधर्मे च योगस्य महत्त्वम्

**स्वपनशीट:**

महर्षेः कृष्णद्वैपायनवेदव्यासस्य आमरकृतिरिदं पुराणशास्त्रम्। पुरति अग्रेगच्छति इति तुदादिगणपठितात् "पुर" अग्रगमने इति धातोः औणादिकात् "क" प्रत्यये "पुरा" शब्दः निष्पद्यते। यद्यपि अष्टादशमहापुराण-उपुराणाञ्च वर्त्तन्ते तथापि सर्वेषु पुराणेषु योगस्य महत्त्वं नैव परिलक्ष्यते । विशेषतः गीतामहाभारतरामायणञ्च महाभारते शान्तिपर्वण्यपि योगस्य महत्त्वं दरीदृश्यते। धर्मशास्त्रमेकमानवाधिकारशास्त्रम्। धृञ्-धारणपोषणयोरित्यस्माद्धातोर्निष्पन्नोऽयं "धर्म" शब्दः यज्ञ-धारण-पालन-धार्मिकविधि-धार्मिकगुण-अध्ययन-हान-तपः-स्वाधाय-नियमाचरण-मानवाधिकार-कर्तव्य-नियम-आचारविध्यादिषु अर्थेषु वेदोपनिषदादिषु प्रयुक्तो दृश्यते। स्मृतिशास्त्रे विशेषतः मनुस्मृतौ, दक्षस्मृतौ, याज्ञवल्क्यस्मृतौ च योगस्य विशेषमहत्वं विद्यते। "युजसमाधौ""युजिर योगे" "युज् संयमने" च इति धातुनां भावे घञ्-प्रत्यये कृते निष्पन्नोऽयं "योग" शब्दः।

मनसि स्थिरसुखं लाभ्यार्थमेकमेवमार्गं भवति योगः । यथोक्तं शास्त्रे -

योगमार्गात्परो मर्गो नास्ति श्रुतौ स्मृतौ।

शास्त्रेष्वन्येषु सर्वेषु शिवेन कथितः पुराः।। (१.सं.वा.प्र.पृ. -६२)

ब्रह्मज्ञानोपायत्वेन अष्टाङ्गयोगानां प्रतिपादनमपि कृतम्। यथा- यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयश्च। योगं विना ज्ञानमेवमोक्षं न सम्भवति। यथोक्तं शास्त्रे -

योगहीनं कथं ज्ञानं मोक्षदं भवति ध्रुवम्।

योगोऽपि ज्ञानहीनस्तु न क्षमो मोक्षकर्मणि।।(सं. वा. द. पृ. - ६३)

महाभारते शान्तिर्वणि महर्षिः याज्ञवल्कयः महाराज-जनकं योगतत्वं समुपदिशति। तन्मते वेदप्रतिपादितयोगः स्थूलसूक्ष्मभेदेन द्विधा विभाज्यते। अणिणादीनाम् अष्टसिद्धिनां प्रदायको अस्ति स्थूलयोगः। यमनियमाष्टगुणयुक्तोऽस्ति सूक्ष्मयोगः। पुनश्च योगसाधनं सगुणनिर्गुणभेदेन वा द्विधा निभाज्यते। तद्यथा - वेदेषु याष्टगुणानि योगमाहुर्मनीषिणः।

सूक्ष्ममष्टगुणं प्राहुर्नेतरं नृपसन्तम्।।३(म.भा. श. प.३१६.८-२)

ध्यानमेव योगस्य परमबलम्। एतद् ध्यानं च द्विधा कर्त्तुं शक्यते। मनसः एकाग्रतया प्राणायाम एव वा। प्राणायामोऽपि सगुणनिर्गुणभदेन द्विधा चिन्त्यते। यथा -

योगकृत्यं तु योगानां ध्यानमेव परं बलम्।
तच्चपि द्विविधं ध्यानमाहिर्विद्याविदो जनाः।।

एकाग्रता च मनसः प्राणायामस्तथैव च।

प्राणायामस्तु सगुणो निगुणो मनस्तथा।।(म.भा.श.प. - २३६.९)

भागवते भगवान् श्रीकृष्णः योगत्रयं भक्तियोगस्य महात्म्यं प्रतिपादयोमास। यथा -

योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधिस्त्रया।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित्।।
निर्विण्णानां ज्ञानयोगो न्यासिनामिहकर्मसु।
तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनम्।।५(श्री.भ.गी.-११.२०.६-८)

अन्यत्र योगस्य महत्वं प्रतिपादयता श्रीकृष्णेनोक्तम् -

योगयुक्तो निशुद्धात्मा विजितामा जितेन्द्रियः।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते।।६(गी.ता. - ५.७)

मनुस्मृतौ उक्तम् - "सूक्ष्मतां यान्ववेक्षेत योगेन परमात्मनः"७(मनु.स्मृ. - ६.६) याज्ञवल्क्यस्मृतौ उक्तं यत् - योगस्याश्रयेण परमात्मतत्त्व दर्शनं सम्भवति।

इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम्।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्।।८(य.स्मृ.-१.१.८)

तथा च दक्षस्मृतौ उक्तम् -

लोको वशीकृतो येन येन चात्मा वशीकृतः।
इन्द्रियार्थो जितो येन तं योगं प्राबवीग्यहम्।।९(द.स्मृ. ७.१)

पुनः -

अभियोगान्तभभ्यासात् तस्मिन्नेव तु निश्ययाता।
पुनः पुनश्च निर्वेदाद्योगः सिद्ध्यति नान्यया।।१०(द.स्मृ. - ७.६)

शोधच्छात्रः
धर्मशास्त्रविभागः
श्रीसदाशिवपरिषरः, पुरी

# सांख्ये जगत्कारणविमर्शः

सुमित्रा पण्डा

दर्शनं भवति भारतवर्षस्य प्राणपिण्डम्। भारतस्य दार्शनिकी दृष्टिः विश्वे सर्वत्र सम्माननीया। संसारेऽस्मिन् सर्वे जीवाः विजयिनः भवितुमिच्छन्ति। इतरेषां प्राणिनामपि एतादृशी प्रवृत्तिः दृश्यते। सा विशेषता भवति तस्य विवेकशक्तिः। श्रीमद्भगवद्गीतायामुक्तम् "यो यच्छ्रद्धः स एव सः[१]। मानवस्य कार्यं श्रद्धानुरूपं भवति। इदमेवदर्शनशास्त्रस्य मूलं रहस्यम्। तदेवावबोधनार्थं युक्तीनां विचारधाराणामुपयोगः भवति। "आत्मावाऽरे द्रष्टव्यःह्न[२]इति दर्शनशास्त्रस्य प्रतिपाद्यविषयरूपेण गृह्यते। वेदोपनिषदि च सर्वत्र गृहीतमिदं यत् आत्मा एव साक्षात्कारस्य विषयः न अन्यः। सिद्धान्तोयं दर्शनशास्त्रस्य मूलप्रतिपाद्यो विषयः। श्रद्धायुक्तसत्यवान् जनः गुरूमुखात् आत्मविषयकं ज्ञानं प्राप्य तस्य श्रवणमनननिदिध्यासनं करोति। तेन तनुमनसोः निखिलकल्मषपरिहारेण परमज्ञानस्याधिकारी भवितुं शक्नोति। तदनन्तरं तस्यात्मसाक्षात्कारो भवति। इदमेव भारतीयदर्शनम्।

दृश्यते विचार्यते - ज्ञायते अनेनेति दर्शनम्। अर्थात् येन आत्मा ज्ञायते विचार्यते सदसदात्मकविचारो वा क्रियते तदेव दर्शनम् इति। वस्तूनां तात्विकं स्वरूपज्ञानम् भवति दर्शनम्। दृश्यमानं जगदिदं सत्यं मिथ्या वा ? जडात्मकं चेतनं वा ? प्रकाशमयं अन्धकारात्मकं वा ? आधिव्याधिजरामरणयुक्तया भीषणव्यथया समन्वितं निरन्वितं वा ? एतदतिरिक्तं संसारेस्मिन् के पदार्थाः दृश्यन्ते ? आत्मभूतवस्तु तात्विकं इत्यस्य किं स्वरूपम् ? कुतः आगतः ? कुत्र गच्छति ? दृश्यमानस्य संसारस्य स्वरूपं किं ? संसारेऽस्मिन् ज्ञातव्यः कः ? कर्त्तव्यं किमित्यादीनां प्रश्नानां समाधानं भवति भारतीयदर्शनम्।

भारतीयदर्शनपरम्परायां सांख्यदर्शनमतिप्राचीनदर्शन्मस्ति। तत्रास्तिकदर्शनेषु प्रायतः सर्वत्रैवास्य दर्शनस्य मान्यता परिलक्ष्यते। गीतोपनिषत्सु सांख्यशब्दस्य प्रयोगः बहुलतया दरीदृश्यते। विशेषतः श्वेताश्वतरोपनिषत्सु सांख्यसिद्धान्तस्य प्रतिपादनं बहुधा कृतमस्ति।

**अजामेकां लोहितशुक्लकृष्णां वह्विः प्रजाः सृजमानां स्वरूपाः।**
**अजो ह्येको जुषमाणो नुशेते जहात्येनां भूक्तभोगामजोन्यः।[३]**

पञ्चमवेदत्वेन प्रसिद्धे महाभारतेऽपि सांख्यशब्दस्य प्रयोगः दृश्यते। महाभारते सांख्यदर्शनमाहात्म्यं यथा-

**नास्ति सांख्यसमं ज्ञानं नास्ति योग समं बलम् ।**[४]

"**सम्**" उपसर्गपूर्वक "**चक्षिङ्**" धातोः "**अण्**" प्रत्यायन्ते सति सांख्यशब्दस्य निष्पत्तिः भवति। प्रकृतिसमेतचतुर्विंशतिजडतत्त्वं तथा पुरुषमात्र - चेतनतत्त्वमेतयोः भेदज्ञाननिरूपणं यत् करोति तन्नाम सांख्यशास्त्रम् । एतद् दृष्ट्वा महाभारतस्य वचनं यथा-

**"संख्या प्रकुर्वते चैव प्रकृतिं च प्रचक्षते।**

**तत्त्वानि च चतुर्विंशत्परिसंख्याय तत्त्वतः।।"**[५]

सांख्यशब्दस्यार्थः **मुख्यरूपेण भवति - सर्वप्रकारकं तत्त्वज्ञानं सांख्यम्।**

यथातथ्येन निरूपणं साङ्गोपाङ्गोञ्च मूलभूतानां सृष्टि- स्थिति- लय- निरूपकतत्त्वानां विचारः। श्रीमद्भगवद्गीता- महाभारत- श्रीमद्भागवतादिषु च ग्रन्थेषु सांख्यनिष्ठः, सांख्ययोगः, सांख्यमिति च प्रयोग उपलभ्यन्ते। सर्वत्र सांख्यशब्दस्यार्थः तत्त्वज्ञानस्वरूपकं एव गृह्यते।

जगतः मूलकारणरूपेयं प्रकृतिः । प्र करोति इति प्रकृतिः इति। प्रकर्षेण क्रियते यया सा इति व्युत्पत्या सा महदादि त्रयोविंशतिव्यक्ततत्त्वानां उत्पादिका तस्मात्प्रकृतिरित्युच्यते। मूलञ्चासौ प्रकृतिश्चेति मूलप्रकृतिः। विश्वस्य कार्यं ... प्रकर्षेण क्रियते सर्वं जगदनयेति प्रकृतिः, प्रश्च कृश्च तिश्चति समाहारद्वन्दे प्रकृतिः अर्थात् सत्त्वरजस्तमसां समवायः प्रकृति। यतोऽत्र सत्त्वरजस्तमांसि प्राकृतिकं सर्वमपि जगत्परिलक्ष्यते। "**प्रकृष्टाकृतिःअस्याअस्तीति**" प्रकृतिः। "**प्र**" उपसर्गपूर्वकात् "**कृ**" धातोः "**क्तिन्**" प्रत्यये प्रकृतिपदं निष्पद्यते। अस्यार्थः प्रकर्षेण करोति, उत्पादयति वा इति।

प्रकृत्याः नटस्थलक्षणं प्रकृष्टवाचकः इति तस्मिन्नेव प्रतिपादितम्। प्रा पूरणे धातोः पचाद्यच् करणे प्र शब्दः निष्पद्यते। कृति शब्दः सृष्टिव्यापारार्थे प्रयुक्तः भवति। तात्पर्यं तु प्रा प्रकृष्टा मुख्या कृतौ सृष्टौ या सा प्रकृतिः इति। अत्र व्याधिकरणपदबहुव्रिहीसमासः, परन्तु पृषोदरादित्वात् प्रा शब्दः ह्रस्वे तथा च मुख्यत्वेन सृष्टिकर्त्री या सा प्रकृतिः इत्यर्थः फलति। एवञ्च आद्यसृष्टिकर्तृत्वं प्रकृतेर्लक्षणम्।

वस्तुत: इयं प्रकृति: त्रयोविंशतिविकिरान् उत्पादयति, तस्मात् प्रकृति: ज्ञानस्य विरोधी तस्मादविद्या, विचित्रारूपां सृष्टिं सृजति तस्मात् माया इति। तच्चोक्तम् – प्रकृति इति उच्यते विकारोत्पादकत्त्वात्, अविद्या ज्ञानविरोधित्वात्, माया विचित्रसृष्टिकरत्वात्। तथा च कथयन्ति वाचस्पतिमिश्रमहाभागा: यद् – स्वयमनादिरूपा भूत्वा महदादित्रयोविंशतितत्त्वानामुत्पादिकेयमेका तथापि सत्त्वरजस्तमोमयी त्रिगुणात्मिकेयं प्रकृति:, तां प्रणमाम:।

समस्तकार्याणां कारणरूपावस्था इयं प्रकृति:। एवञ्च कार्याणां केवलमेषैब मूलोपादानरूपा इति। एषा प्रकृति: इन्द्रियागोचरा तस्मात् अव्यक्तम् इत्यनेनापि नाम्ना अभिधीयते। एवञ्च प्रसवधर्मिणी, गुणक्षोभिणी तथा परिणामिनी इत्यादिभि: विभिन्नैर्नामभिरपि प्रकृतिरूच्यते।

**प्रकृतिस्वरूपम्**

अस्य अव्यक्तस्य स्वरूपमिदानीं विषेषता उच्यते –

**हेतुमदनित्यव्यापि सक्रियमनेकमाश्रतिं लिङ्गम्।**

**सावयवं परतन्त्रम व्यक्तं विपरीतमव्यक्तम्।।**[६]

**अहेतुमत्**– हेतुर्नामोपादानं, कारणं, निमित्तमिति। तद् हेतुरस्यास्तीति हेतुमत्। किन्तु प्रकृते: न तावद् किमपि कारणं वर्तते तस्या: मूलप्रकृतित्त्वात्। तस्मादहेतुमदव्यक्तम्।

**नित्यम्** - यद् यद् उत्पाद्यं तद् तदनित्यम्। अत: अनुत्पाद्यमानत्वात् नित्यमव्यक्तम्।

**व्यापि** –प्रधानं व्यापि सर्गतत्त्वात्। यद् तत्त्वं सर्वगतं भवति तद् व्यापि उत व्यापकम् इत्युच्यते। कारणं हि अधिकदेशवृत्ति: भवति अत: व्यापकम्।

**निष्क्रियम्**–महतत्वत: सूक्ष्मतन्मात्रपर्यन्तं व्यक्तं तत्त्वं सर्वगतं नास्ति। अत: तत् तत्त्वं त्रिलोकेषु अपि इतस्तत: संसरणं कुर्वद् भवति। अत: सक्रियमित्युच्यते।

**एकम्** - अव्यक्ततत्त्वस्य सजातीयभेदाऽभावात् तत् केवलम् एकमेव। मूलप्रकृति: हि त्रिगुणानां साम्यावस्था एव। अत: सा एकैव न तु त्रिप्रकारिका।

अनाश्रितिम् - अव्यक्तम् अनाश्रितिं यतो हि तस्य न तु किमपि कारणमस्ति येन सह आश्रयाऽश्रयीभावकल्पना सम्भवेत्।

अलिङ्गम् –न लिङ्गम् अलिङ्गम् अव्यक्तमिति। अतः न तस्य कुत्रापि लयः समभवति तस्मात् यद् लयं न गच्छति तदव्यक्तम्। अर्थात् अलिङ्गमव्यक्तम्।

निरवयवम्–अवयवनमिति अवयवः इति। मूलप्रकृतेः बध्यादि कार्येण सह तादात्म्यसम्बन्धात् उक्तसंयोगो नास्तीति। सत्वरजस्तमसां नित्यप्राप्तत्वात् परस्परं सम्बन्धाऽभावः। तस्मात् प्रधानं निरवयवम्।

स्वतन्त्रम्–मूलप्रकृतिश्च अस्माद् भिन्ना, सा च महदादतित्त्वानाम् उत्पाद्यते पूर्णस्वातन्त्रम् आदयदाति। कस्यापि तत्वान्तरस्य अपेक्षां विनैव सा मूलप्रकृतिः स्वकार्यान् उत्पादयति।

<u>प्रकृतेः सिद्धिः</u>

सांख्यदर्शने स्वीकृता प्रकृतिः श्रुतिसिद्धा इति। अतः सा न प्रमाणरहिता। प्रकृत्याः अस्तित्वसिद्धेः हेतुपञ्चकं स्थापयति कारिकाकारः। तद्यथा –

**भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृतेश्च।**

**कारणकार्यविभागादविभागाद्वैश्वरूपस्य।।**[७]

हेतुपञ्चकं यथा – १)भेदानां परिमाणात् २)भेदानां समन्वयात् ३)शक्तितः प्रवृतेश्च ४)कारणकार्यविभागात् ५)अविभागात् वैश्वरूपस्य इति।

सांख्यसूत्रानुसारेण पृथीव्यादिस्थूलमहाभूतेभ्यः तेषामुपादानकारणभूतानां पञ्चतन्मात्राणां ज्ञानं भवति। पञ्चतन्मात्रेभ्यः तथैकादशेन्द्रियेभ्यः तेषामुपादानकारणभूतस्य अहङ्कारस्य ज्ञानं सम्भवति। अहङ्कारात् अन्तःकरणरूपमहतः ज्ञानं भवति तथा कार्यकारणभावैः मूलतत्त्वस्य प्रकृतेः अनुमानात्मकज्ञानं सम्भवति।

एतावता कार्यरूपव्यक्तैः कारणरूपा प्रकृतिरनुमीयते इत्युक्तम्। साविकृतिःप्रकृतिरीति[८]। अतः प्रकृतिरीयं सर्वासां विकृतीनां कारणत्वात् केवलकारणरूपा मूलप्रकृतिरीति। न तु अस्याः कारणं किमपि विद्यते। अतः नेयं विकृतिरीति।

**सहायकग्रन्थसूची**


१.श्री.म.भा. १७-३६

२.बृहदारण्यकोपनिषद-२-४-५

३. श्वे.उ-४-५

४.म.भा

५. म.भा,शा.प.३०६,४२ - ४३

६.सां.का. १०

७.सां.का. १५

८.सा.त.कौ,का.३



शोधच्छात्र:

सांख्ययोगविभाग:

श्रीसदाशिवपरिषर:, पुरा

# सांख्यमते आत्मस्वरूपविचारः

**पदारविन्दपण्डा**

सांख्यमते चेतनपदशक्यतावच्छेदकतया सिद्धजातिविशेषवत्वम् तदेवात्मत्वमिति तद्वानात्मा भवति । सांख्यमते चेतनत्वं न ज्ञानाश्रयत्वम् । ज्ञानस्य पुरुषे अभावात् । सांख्यमते प्रकृतिः कर्त्री । सत्वरजस्तमोगुणात्मिका मूलप्रकृति कर्त्री भवति । कर्तृत्वं च कर्तृभूतबुद्ध्यात्मकातःकरणकारणत्वं तद्वत्वम् । कृत्तिमत्वम् कर्तृत्वं नैव अत्र भवति। तस्य बुद्धौ प्रकृतिकार्यात्मके स्वीकारात् । अकार्यावस्थोपलक्षिततत्वे सति गुणसामान्यत्वम् प्रकृतेः लक्षणं भवति । न्यायमताभिमतं कृतिमत्वात्मकं कर्तृत्वं च पुरुषे वर्त्तते । "**पुरी शरीरे शेते इति पुरुषः**" चेतन इत्यर्थो भवति सांख्यमते प्रकृतिः कर्त्री। पुरुषस्तु पुष्करपलाशवन्निर्लेपः । अर्थात् कृतिज्ञानसुखदुःखेच्छादिलेपरहितः" सर्वदा शुद्धो भवति। "निर्लेपो" नाम **असङ्गः** । पुष्करस्य कमलस्य पत्रमम्भसा लिप्तं न भवति तद्वत् पुरुषः। वास्तविकसुखदुःखादिसंयोगानधिकरण तदेव पुरुषस्य निर्लेपत्वम्। अन्ये वदन्ति निर्लेपत्वं च अनुयोगितासम्बन्धेन विजातीयसुखादिसंयोगवद्भिन्नत्वम्। अत्रानुमानं भवति पुरुषः कर्तृत्वाभाववान् कारणत्वाभावादित्यनुमानेन कर्तृत्वाभावः पुरुषे साध्यते । परन्तु पुरुषः कारणत्वाभाववान् चेतनत्वात् । पुरुषः चेतन अतएव निर्लेपो भवति । यत्र हेतुः नास्ति तत्र साध्योपि नास्ति यथा प्रकृतिः ।

सांख्यमते कार्यस्य कारणेन उपादानेन सह तादात्म्यसम्बन्धो वर्त्तते । कार्यस्य घटादिनाशे सति कारणस्य कपालादे नाशो भवति । तद्वादत्मनः नाशोऽपि स्यात् । स च मा भवतु इति कारणात् आत्मनः अकारणत्वम् । अर्थात् आत्मा न कारणमिति कथं स्वीकार्यम् । अत्र प्रश्न उदेति निर्विशेष पुरुष एव स्वीकार्यः प्रमाणाभावात् निरर्थकत्वाच्च। तत्र उच्यते अन्तःकरणात्मकं जडरूपं प्रकृतेः साक्षात्कार्यम् । तत्र वर्त्तमानो यो चैतन्याभिमानः

पुरुषस्य कल्पनम् । तथा च पुरुषे
चैतन्योऽहमित्याकारकः । तादृशाभिमानान्यथानुपत्या पुरुषस्य कल्पनम् । तथा च पुरुषे
प्रसिद्धस्य चेतनभावस्य पुरुषसंयुक्तबुद्धौ चेतनाभिमानसमाश्रयेण उत्पपत्तेः । का सा
बुद्धिः यस्यां पुरुषोपरागवशात् चैतन्यस्य प्रतीतिर्भवति । सांख्यैः त्रिगुणसामान्यावस्थात्मकः
प्रकृतेः प्रथमसाक्षात् कार्यावस्था विशेषो बुद्धिः । स च बुद्धिः महतत्त्वनाम्ना अन्तःकरणनाम्ना
इति उच्यते । तस्या बुद्धेः पुरुषेण सह संयोगे संसारे बन्धनम् । संयोगाभावे सति
पुरुषस्यात्यन्तिकदुःखात्मको मोक्षः भवति । अन्तःकरणात्मिकायाः बुद्धेरेव ज्ञानविज्ञानात्मकः
परिणामः । चक्षुरादीन्द्रयात्मकनालिका द्वारा यो घटपदादिविषये सह
विषयाकारात्मकसम्बन्धः परिणामः स एव ज्ञानरूपो भवति । तादृशं ज्ञानं बुद्धेरेव धर्मः
न तु आत्मनः । अतः सांख्यमते चेतनत्वम् न ज्ञानाश्रयत्वं भवति । इच्छासुखदुःखादिद्वयम्
अपि परिणामः बुद्धेरेव । तथा च कर्त्री भोक्त्रीसुखदुःखादिमती बुद्धिः न तु आत्मा । अयं
घटः इत्याकार चितवृत्तिप्रमाणम् । तज्जन्यघटमहं जानामीत्यनुव्यवसायः प्रमा भवति ।
एवं बुद्धिस्थः कर्तृत्वादिधर्मः अपि पुरुषे औपाधिकः ते स्वीकुर्वन्ति ।

ममेदं कर्त्तव्यमिति प्रत्ययः सर्वस्य जनस्य भवति । तत्र नैयायिकाः वदन्ति मम इत्यनेन स्वामित्वम् इदं इत्यनेन विषयत्वम् कर्त्तव्यमित्यनेन व्यापारः भासते । स्वामित्वमात्मनोः वास्तविकं भवति । विषयत्वं विषयस्य वास्तविकत्वम् । क्रिया च विषयस्था वास्तविकी तेन ज्ञाने विषयतया भासन्ते । अतः नैयायिकानां मते न भ्रमः। सांख्यमते मम इदं कर्तव्यमित्यंशत्रयवती वुद्धि भवति । पुरुषः पुरुषोपरागः अर्थात् बुद्ध्या सह सम्बन्धः आरोपिताभेदात्मको भवति । अत्र प्रश्न उदेति तेजस्तिमिरवत् जडचेतनयोः कथं अभेदः ? तत्र उच्यते जडस्वरूपा बुद्धे सत्वोद्रकात्मकेन पुरुषसाम्यता भ्रमात् स्वच्छतया च तस्य पुरुषस्य बुद्धौ प्रतिविम्बस्य पतनाच्च अभेदः आरोपितो भवति। स च अभेद अवास्तवः भवति । बुद्धिपुरुषयोः भेदश्च वास्तवः तत्र भासमानः अभेदस्तु अभेदसम्बन्धः । यथा "**दर्पणस्यैव मुखोपरागः**" । अर्थात् दर्पणस्य स्वच्छतया तत्र प्रतिबिम्बते मुखे दर्पणस्य वास्तवसम्बन्धेऽपि स्वच्छत्वरूपोपाधि - प्रयुक्ताध्यासिकमुखेसम्बन्धः भासते । स च सम्बन्धः वास्तवः । तथैव आत्मबुद्ध्योः

सम्बन्धः न वास्तवः । इदमांशघटादिविषयः बुद्ध्या सह यः सम्बन्धः स ज्ञानात्मकः नालिकाद्वाराजायमानबुद्धिपरिणामविशेषकम् । अयं घटः इत्याकारकं स च सम्बन्धः वास्तवः । अर्थात्बुद्धौ घटाद्याकारकज्ञानमपि विषयसम्बन्धः । स च सम्बन्धः ज्ञानं बुद्धेः धर्मः न तु बुद्धि इति न्यायमताऽपेक्षया सांख्यमते वैलसष्यम् दृश्यते। यथा – **"निश्वासाहिहत दर्पणस्य मलिनिमा"** । एवं च फुत्कारस्य दर्पणेन सह सम्बन्धयोगात्मकं मालिन्यं यथार्थो वर्त्तते । तथैव बुद्ध्या सह विषयस्य सम्बन्धः ज्ञानात्मकः वास्तवो भवति । कर्त्तव्यमिति व्यापारांशः तेन अंशत्रयवती बुद्धिः बुद्धिपरिणामेन अयं घटः इत्यादिवृत्तिरूपज्ञानेन सह यः पुरुषस्य सम्बन्धः घटविषयक– ज्ञानवानहं अथवा घटः इति ज्ञानवान् अहम् । इत्याकारकज्ञानविषयकबोधात्मकः। स च सम्बन्धो प्रमात्मको । अन्तिमपरिमाणरूपापरिणामिनः पुरुषस्य अवास्तवो निगद्यते। स चोपलब्धिः शब्देनापि उच्यते दर्पणमलिनिम्नेव मुखस्योपलब्धिरुच्यते । ज्ञानवत् सुखदुःखेच्छाद्वेषधर्माधर्माः बुद्धेरेव । कृति प्रयत्नः तदधिकरणवृत्तित्वेन अनुभवसिद्धत्वात्। तेषां कृतिसाध्यत्वात् यत्र ज्ञानं तत्रोच्छा यत्र इच्छा तत्र कृति इति नियमः वर्त्तते । तेन सांख्यमते बुद्धौ चैतन्यानुभवानुरोधेन बुद्धावेव चैतन्यमिति । सांख्याचार्याणां मतम् ।

**शोधच्छात्रः**
***नव्यन्यायविभागः***
**श्रीसदाशिवपरिषरः, पुरी**

**सहायकग्रन्थसूची**

१. न्यायसिद्धान्तमुक्तावली
२. सांख्यदर्शनम्
३. दिनकरी
४. रामरूद्री
५. किरणावली
६. सांख्यतत्त्वकौमुदी

# साम्प्रतिकसमाजे योगाङ्गानां वैशिष्ट्यम्

ज्योतिर्मयीसाहुः

योगमाध्यमेन समाजे बुद्धिविकाशः दृश्यते। बुद्धिविकाशवलेन मानवाः अन्तरीक्षमपि गन्तुं प्रभवन्ति परं बुद्धिविकाशस्य दुस्परिणामः अपि बहु वर्तते। तादृशं दुस्परिणामं निराकर्त्तु योगशास्त्रस्य अपेक्षा बहु वर्तते। तत्रापि अष्टाङ्गयोगानां ज्ञानं नितराम् अपेक्षते इति मया किञ्चित् अष्टाङ्गयोगमधिकृत्य किञ्चित् प्रस्तुयते।

प्राणायामस्तु प्राणवायुसयमविशेषः। कण्ठस्थवायुः स्वासप्रश्वासलक्षणस्य गतिविच्छेदः प्राणायामः। योगदर्शने च तस्मिन् सति स्वासप्रश्वासयोर्गतिविच्छेदः प्राणायाम इत्युच्यते । पूरकरेचककुम्भकाः प्राणायामत्वेन निगद्यन्ते । योगक्रियाविशेषानां क्लेशानामासनजयाज्ययः। आसनं नाम योगकर्मविशोधिकरणबन्ध इति भासर्वज्ञाशयः । करणालां शरीरवयवानां संयमः । यथासुखमासनं बध्वा प्रच्छन्ने नर्वापे निर्जने निःसन्दे च देशे रेचतपूरककुम्भकप्रकारः कर्तव्य इति न्यायभूषणे स्पष्टः। रेचकपूरककुम्भकरूपप्राणायामो वनगजेन्द्रवत्[1] शनैश्शनैर्ज्ञातव्यः । वायु प्रयोगेण शनैर्जीयमान रागादिमलमुच्छेदयम् योगप्रापकः। अप्रयोगेण चानर्थकारकः। रेचकपूरकम्भकभेदेन साधारणतः प्राणायामस्त्रिविधः। किन्तु केवलकुम्भकश्चतुर्थप्राणायामत्वेन परिगण्यते । तदुक्तं नारदीये[2] ☐

रेचकः पूरकश्चैव कुम्भकः सून्यकस्तथा ।
एवं चतुर्विधः प्रोक्तः प्राणायामो मनीषिभिः।।
झन्तुनां दक्षिणा नाडी पिङ्गला परिकीर्त्तिता ।
शूयदैवतका चैव पितृयोनिरिति स्मृता ।।
देवयोनिरिति ख्याता इडा नाडी तु वामगा ।
तत्राद्यदैवतं चन्द्रः शृणुध्वं गदतो मम ।।

बाह्याभ्यन्तरस्तम्भवृत्तिभेदेन त्रिविधः प्राणायामो देशकालसंख्याभिर्निमितः परीक्षियतश्च सन् दीर्घसूक्ष्मश्च भवति । **बाह्याभ्यन्तरस्तम्भवृत्तिदेशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः ।**

सूत्रान्निक्षीयते ।

चित्तस्य स्थिरवृत्तित्वं श्वासप्रश्वाससंयमात् ।
इति पातञ्जलाज्ज्ञेयः प्राणायामसमाशयः ।।

प्राणायामाभ्यासेन विवेकख्यातेशवरणं क्षीयते । "ततः क्षीयते प्रकाशावरणम्" इति पतञ्जलिसूत्रान्नोवबोधः ।

## सहायकग्रन्थसूची

१.यो.सू.-२/८०
२.ना सू.-२/८२

विशिष्टाचार्यस्यच्छात्री
स्नातकोत्तरन्यायदर्शनविभागः
सदाशिवपरिसरः, पुरी

# आभ्यन्तरयोगाङ्गानामुपगिताम्

चिन्मयीमहान्ति

धर्मार्थकाममोक्षः चत्वारः पुरुषार्थः प्रसिद्धः । तत्र मोक्षस्य परमपुरूषार्थत्वं सर्वेऽपि अङ्गीकुर्वन्ति। तदर्थम् आत्मज्ञानं अपेक्षते । तत् तु षाड्विंशतितत्त्वानि योगशास्त्रे एतदेव आध्यात्म शास्त्रम् इति उच्यते । आध्यात्मशास्त्रम् अपि द्विविधम् । उपदेशात्मकम्, विचारात्मकम् इति। योगशास्त्रम् उपदेशात्मकम् अङ्गीकर्त्तव्यम् । अस्ति योगशास्त्रस्य महत्त्वं तादृशम् । इदानिन्तनकाले योगशब्देन आसनामेव गृह्यते । परमं न तथा ज्ञानार्थमपि अस्ति योगस्य अपेक्षा शङ्कराचार्येण अपि स्वकृतभाष्ये प्रधानमल्लत्वेन योगस्य सांख्यस्य च चर्चा कृता विद्यते ।

आध्यात्मविद्यादिपदैः उपनिषदादिषु प्रसिद्धेयं योगविद्या प्रथमं हिरण्यगर्भेण ऋषिन् प्रति उपदिष्टा। कः अयम् हिरण्यगर्भः इति ? अद्यापि न निर्णयः अमुमेव हिरण्यगर्भ योगमहर्षित्य पतञ्जलि प्रकृतं प्रणिलयति संप्रदायः । साम्प्रतिक समाजे आभ्यन्तर योगाङ्गानाम् उपयोगीनाम् यथा शास्त्रं प्रतिपाद्यते ।

**धारणा**

“देशवन्धश्चितस्य धारणा[१]” तथा च ध्येयवस्तुन आधारदेशे चित्तस्यैकाग्रता एव धारणेति भावः फलितः बाह्याभ्यन्तरद्रेशविशेषे चित्तस्य सम्बन्धो धारणानान्मा व्यपदिश्यते। देशविशेषास्तु नाभिचक्रं हृदयपुण्डरीकं शिरसिज्योतिर्नासिकाग्रभागो जिह्वाग्रभाग इत्यादयः । एतेत्वाध्यात्मिकदेशाः वृत्तिमात्रेण च सूर्यादिवाह्यदेशरूपविषयेषु चित्तस्य सम्बन्धी न तु स्वरूपेण । अत्रापि पुराणम्[२]–

"प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम् ।
वशीकृत्य ततः कुर्याच्चित्तस्थानं शुभाश्रये ।।"

**ध्यानम्**

"तत्र प्रत्ययैकतानता[३]" इति सूत्रस्य तस्मिन् देशे ध्यपालम्बनस्य प्रत्ययैकतानता सद्रुशः प्रवाहः प्रत्ययात्तरेणापरामृष्टो ध्यानमिति व्यासभाषध्यानतत्वं सुगमम् ।

धारणा अवच्छिन्ना ज्ञानान्तरेणासंस्पृष्टा वा सती ध्यानत्वमाप्नोति । इदं च ध्यानपरिपक्वं सत्पर्यवसाने ध्येयाकारेण परिणमते । तदानीं चित्तवृत्तिविद्यमाना अद्यविद्यमानेव भासते ।

**समाधि**

योगएव समाधिः । योगस्तु चित्तवृत्तिनिरोधः । अत्र चित्तवृत्तिनिरोधप्रकरणे सर्वशब्दग्रहणात् साम्प्रज्ञातोपि योग इत्याख्यायते । अतएव तदेवार्थमात्रनिवासस्वरुपेण शून्यमिव समाधि । "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः[४]" । ध्यानमेव ध्येयाकारमात्रनिर्भासप्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति ध्यानोत्कर्षान्निवाताचलप्रदीपावस्थानमिवेकत्रैव चेतसोवस्थानं समाधिरभिधीयते इति न्यायभूषणे भासर्वज्ञवचनमवध्येयम् ।

वस्तुतो ध्येयविषयकचित्तवृत्तिनिरूद्धत्वादसम्प्रज्ञातसमाधिर्निर्विकल्पकसमाधिनाम्ना परिकीर्त्यते । निर्विकल्पकसमाधिस्तु चरम समाधिरिति । सम्प्रज्ञातसमाधिना लब्धतत्वज्ञानेन वैराग्यं समुत्पद्यते । निर्विषयकपरवैराग्यस्याभ्यासेन सम्प्रज्ञातसमाधेः समुत्‌ादः सर्ववृत्तिनिवृत्तावण्यस्मात्पुनो व्युत्पानातत्र संस्करामात्रस्याविशिष्टत्वात् संस्कारविशेष इति "तदाभिधानं विरामप्रत्ययाभ्यासपूर्वः संस्कारविशेष" इति सुत्रात्प्रतीयते । अतः आह व्यासभाष्यम्☐ सर्ववृत्तिप्रत्यस्तमये संस्कार विशेष निरोधश्चित्तस्य समाधिरसम्प्रज्ञातः इति अद्वैतवैदान्ते ज्ञातृज्ञानज्ञेयभेदेषुद्धेरसत्वेपि निर्विकल्पकेृखण्डेब्रह्माकारश्चित्तवृत्तेः सत्वात् योगसिद्धान्तृसम्प्रज्ञातसमाधौ कस्यापि वृत्तेः कस्यापि प्रत्ययस्याप्यनवस्थानात् सम्प्रज्ञातसमाधौ आत्मसंस्कारे जाते विदेहे कैवल्यापि।

न्नहि योगविमलाञ्जनधौतदृढदृष्टेरन्यस्य, ताराव्युहगतय: प्रतिभाति इत्यात्मतत्त्वविवेकं निर्दिष्टत्वाद्योगिवैशिष्ट्य स्पष्टमेव।

## सहायकग्रन्थसूची

१.यो.सू.-३/२

२.विष्णु.पु.-६/७/८५

३.यो.सू.-३/२

४.यो.सू.-३/३

विशिष्टाचार्यस्यच्छात्री
स्नातकोत्तरन्यायदर्शनविभागस्य
श्रीजगन्नाथसंस्कृतविश्वविद्यालस्य
श्रीविहारस्य पुरीस्थस्य